ISSN 2348 – 8417

# शास्त्रमञ्जूषा

# The Śāstramañjūṣā

https://sites.google.com/site/praachiprajnaa/sastramanjusa

**(A Virtual Publication for the Peer Reviewed Research Papers on Indology)**

Of

# प्राची प्रज्ञा

# Prachi Prajna

https://sites.google.com/site/praachiprajnaa

Indexed in DOAJ






**17th Issue / Vol. IX – December, 2023**

https://sites.google.com/site/praachiprajnaa/sastramanjusa, a Virtual Publication for the Peer Reviewed Research papers on Indology of प्राची प्रज्ञा / Prachi Prajna (ISSN 2348 – 8417) https://sites.google.com/site/praachiprajnaa

17th Issue / Vol. IX – 31st December, 2023

## Scope:

The śāstramañjūṣā is a Virtual Publication for the Peer Reviewed Research papers on Indology, conglomerated to any branch of Sanskrit Studies, i.e. Vedas, Vedāṅgas, Upaniṣads, Philosophies, Purāṇas, Smṛtis, Literature, Poetics, Grammar, Tantras, Astrology, Astronomy and Modern subjects like Computational Linguistics, Environmental Science and allied fields. It aims, without sacrifice of scholarly standards, to engage readers throughout the globe. The Publication remains committed to the re-appraisal of accepted views, and scholarship should reinforce the committed spirit of indology encompassed in the Classical and the oldest language Sanskrit.



**Email :** prachiprajnaenb@gmail.com

# सम्पादकीयम्

सहस्रेभ्यो वर्षेभ्यः पूर्वं मानवेन लेखनकलाया आविष्कारः कृतः । तदारभ्यैयावल्लिखिता सामग्री विभिन्नरूपेण लभ्यते । इयं लेखनप्रक्रिया ईष्टकेषु, पाषाणेषु, चर्मसु, वस्त्रेषु, भुर्जपत्रेषु, ताम्रपट्टेषु, तालपत्रेषु, कर्गजेषु, अन्येषु धातुनिर्मितेषु पट्टेषु, कर्गजेषु च भवति स्म । एतेषु सर्वेषु लिखिता सामग्री पाण्डुलिपिविज्ञानेऽन्तर्भवति । `पाण्डुलिपिः' इति शब्दः आङ्लभाषया manuscript इत्युच्यते यस्यार्थो भवति हस्तलेखः । एवञ्च manuscript इति पदं हस्तलेखरूपं योगार्थं परिहृत्य व्यापकेष्वर्थेषु यथा अभिलेखेषु, शिलालेखेषु, ताम्रलेखेषु, स्मारकलेखेषु, आज्ञापत्रेषु, दानपत्रेषु तथा प्रकाशनपूर्वेषु सर्वेषु लेखेषु व्यवह्रियते । The American People's Encyclopedia अनुसारं मुद्रणात् पूर्वं सर्वमपि साहित्यं पाण्डुलिपिरिति उच्यते, यत् कर्गजेषु अन्येषु केषुचिदपि वस्तुषु लिखितं, टङ्कितम्, उट्टङ्कितं, उत्कीर्णीतं वा स्यात्। पाण्डुलिपिविज्ञानस्य अनेके पक्षाः सम्भवन्ति। तत्र प्रथमः पक्षः ग्रन्थरचनाविषयकः यत्र ग्रन्थविषय-तद्रचयितृ-तत्कालप्रभृतीनां विचाराः भवन्ति। द्वितीयः पक्षः लिपिविज्ञानम्, यत्र लिपि-लिपिकार-लिप्यासन-लिपीकरणसाधनानां विचाराः प्रवर्तन्ते। तृतीयः पक्षः भाषाविज्ञानं यत्र ग्रन्थप्रयुक्तभाषाविषये तत्प्रयुक्तव्याकरणादिविषये चर्चा भवति। "प्राची प्रज्ञा" इति पत्रिकायाः शास्त्रमञ्जूषाया अस्मिन्नङ्के एतान् त्रीन्नपि पक्षानवलम्ब्य कतिचिन्महत्त्वपूर्णानि शोधपत्राणि प्रस्तूयन्ते। आशासे एतानि शोधपत्रणि संस्कृतभाषानिबद्धपाण्डुलिपीनां संरक्षणे सम्पादने च सहायकानि भवेयुः।

सुज्ञानकुमारमाहान्तिः

मुख्यसम्पादकः

शास्त्रमञ्जूषा / प्राचीप्रज्ञा

# TABLE OF CONTENTS



*****************************

# देवप्रश्ने बृहज्जातकम्

## *Bṛhajjātakam* in *Devapraśna*

Srivathsa Achutha

**Abstract**

In the Indian tradition, particularly in the Hindu tradition, the significance of the temple is highly emphasized and considered of utmost importance. In society, there are devout individuals by praying to God, they lead their lives ahead. In these temples, the divine presence, along with the inherent spiritual consciousness and positive energy, greatly contribute to the unity and growth of the devotees of the community . The worship of deities is practiced according to the prescribed rituals of scriptural texts (Aagama shasthra) and traditional customs. Worship of deities is of great importance in India especially in the state of Kerala, known as God's own Country. The declining divine presence or any factors affecting the positive aura in a negative manner can be identified using Jyothisham, also known as "Eye of Veda''.

There is a detailed description on Devaprashnachinthanam in Prashnamargam. Whereas the famous script "Brihajjathakam" deals with the discussion of manushyajaathaka chinthanam. In this study, we will be analyzing the possibility of using "Brihajjaathakam" for devaprashnachinthanam.

**Keyword** - सान्निध्यं, देवप्रश्नः, भावाः, बृहज्जातकम्।

****************************

देवालयादीनां निर्माणानन्तरं शिल्पशास्त्रानुगुणं बिम्बरचनां कृत्वा, आगमविधानोक्तक्रमेण बिम्बशुद्धिः, अधिवासादिबिम्बप्रतिष्ठान्तविधीन् कृत्वा नैवेद्यपूजानैमित्तिकपर्वाद्युत्सवानां घोषणं मन्त्रविभक्तैः सह देवस्य पुरतः प्रार्थनापुरस्सरं क्रियते। ततः परं तदुक्तक्रमेण पूजादिकार्याणि कथं करणीयानीति तन्त्रसमुच्चयाद्यागमग्रन्थेषु निरूपितमस्ति। अनेन क्रमेण सान्निध्यस्य वृद्धिः जायते। क्वचित्प्रसङ्गेषु दोषवशात्सान्निध्यक्षयः भवति। दोषपरिहारार्थम् अपि च सान्निध्याभिवृध्यर्थम् आगमोक्तदिशा प्रायश्चित्तं कर्तव्यम्। दोषज्ञानं, सान्निध्यविचारः, देवालयविचारादयः कथं ज्ञातुं शक्यन्ते चेत् वेदषडङ्गेषु चक्षुत्वेन प्रसिद्धेन ज्यौतिषशास्त्रेणैव एतान् विचारान् ज्ञातुं प्रभवामः। यथा वेदस्य षडङ्गानि भवन्ति तथैव ज्यौतिषस्य अपि षडङ्गानि शास्त्रेषु कथितानि सन्ति।

जातकगोलनिमित्तप्रश्नमुहूर्तगणितनामानि।
अभिदधातीह षडङ्गान्याचार्य ज्योतिषे महाशास्त्रे॥ [1]

जातकं, गोलं, निमित्तं, प्रश्नः, मुहूर्तः, तथा गणितश्चेति ज्यौतिषाचार्यैः ज्योतिषशास्त्रषडङ्गत्वेन कथितानि सन्ति। अत्र प्रश्नशास्त्रेण इहार्जितकर्मणां चिन्तनं च क्रियते। **"इहार्जितं च विज्ञातुं कर्मप्रश्नो विधीयते"**[2] इति। प्रश्नेऽपि मानुषप्रश्नः, देवप्रश्नः, सुरतप्रश्नः, वर्षप्रश्नः, कूपप्रश्नः, नष्टप्रश्नः, विवाहप्रश्नः, सन्तानप्रश्नः तथा रोगप्रश्नादि प्रश्नप्रकाराः विद्यन्ते। जातकं नाम पूर्वजन्मार्जितशुभाशुभफलसूचकं भवतीति वक्तुं शक्यते।

---

[1] प्रश्नमार्गः अ ०१, श्लो ०६

[2] Ibid. अ ०१, श्लो ४१

प्राग्जन्मार्जितपुण्याघप्राबल्योद्रेकहेतुतः।

प्रारब्धसंज्ञी मानुष्यजातौ जातकचिन्तनम्॥[1] इति

देवप्रश्ने जातकग्रन्थस्यास्य बृहज्जातकस्य वैशिष्ट्यं दरीदृश्यते। अस्याध्ययनं विना प्रश्नचिन्तनं दुष्करम् भवतीति प्रश्नमार्गाचार्यैः निर्दिष्टं यथा कथयन्ति -

दशाध्याय्यां विशेषेण श्रमो नैव कृतो यदि। दुष्करः फलनिर्देशः तद्विदां च तथा वचः॥

अदृष्ट्वा यो दशाध्यायीं फलमादेष्टुमिच्छति। इच्छत्येव समुद्रस्य तरणं प्लवनं विना॥[2]

देवालये सान्निध्यक्षयसूचकदुर्निमित्तानि भवन्ति चेत् झटित्येव प्रश्नचिन्तनं कृत्वा क्षेत्रसम्बन्धिसमस्यायाः उत तत् दोषस्यान्वेषणं करणीयम्। ततः परं आगमादिशास्त्रेषु कथितप्रायश्चित्तविधीन् कारयित्वा सान्निध्यवृद्धिः कर्तव्या। सान्निध्यक्षयसूचकानि दुर्निमित्तानि कानि इति जिज्ञासानिवृत्यर्थं चेन्नास् नारायणनम्पूतिरि विरचिते प्रसिद्धकेरली- यागमग्रन्थे तन्त्रसमुच्चये दशमपटले कथितमस्ति।

क्षेत्रे मृतिर्जननमङ्गणमण्टपादौ मूत्रासृगादिपतनं पतितादिवेशः।

सोलूकगृध्रकरटश्वकरोष्ट्रकोलक्रोष्ट्रक्षडुण्डुभपुरस्सरगर्भवेशः॥

बिम्बस्य पातचलनादिरथप्रदाह स्वेदः प्ररोद सहितानि तथाद्भुतानि।

छत्राकनाकमधुकादिसमुद्गमाश्च पूजाविलुप्तिरपि चासति दिष्टदोषे॥

क्षुद्रान्यमन्त्रयजनं प्रतिषिद्धदुष्टपुष्पादिपूजनमथो मरिचादिलेपः।

एतानि तन्त्रकथितानि निमित्तकानि ज्ञेयानि तत्रगुरुलाघव भेदवन्ति॥[3]

क्षेत्राङ्गणमण्डपादिषु मृतिः, जननं, मूत्राऽसृगादीनां पतनं, धर्मभ्रष्टानां देवालयप्रवेशः, उलूकादिजन्तूनां गर्भगृहप्रवेशः, बिम्बपतनं, बिम्बचलनं, बिम्बे स्वेदागमनं, मधूकछत्राक्रोः दर्शनम्, पूजाविलुप्तिः, क्षुद्रान्यमन्त्रयजनं, निषिद्धपुष्पेण पूजनं, तथा मरिचादीनां लेपनं एतानि तन्त्रशास्त्रे कथित सान्निध्यक्षयसूचकानि दुर्निमित्तानि भवन्ति। देवप्रश्नचिन्तनस्य औचित्यं विचारयामश्चेत्

क्षेत्रादीरितपञ्चाकादिकमविज्ञातुं किमप्यस्ति चेत्

वैकल्यादि च पूजनोत्सवविधौ चूर्णादिवार्याहितम्।

सानिध्यापहृदर्थलाभविगमौ वा ज्ञातुमित्यादिकं

देवप्रश्नउदीरितोन्यदपि तत्तद्भावजातं फलम्॥[4]

---

[1] प्रश्नमार्गः अ ०१, श्लो २९

[2] Ibid. अ ०१, श्लो ३१,३२

[3] तन्त्रसमुच्चयम् पटलसंख्या १०, श्लो २, ३, ४

[4] प्रश्नमार्गः अ २४, श्लो ११

पूर्वोक्तसान्निध्यक्षयसूचकदुर्निमित्तानि, पूजनोत्सवादिषु विकलता, सान्निध्यक्षयार्थं आभिचारादिप्रयोगाश्च भवन्ति चेत् तेषां ज्ञानार्थं तथा च तेषां परिहारार्थं देवप्रश्नचिन्तनम् अवश्यं कर्तव्यम्।

देवताचैतन्यस्य बिम्बस्य च आधाराधेयभावसम्बन्धः कल्प्यते। देवताचैतन्यं देवताबिम्बे आवाहनादि प्रक्रिया-पुरस्सरं प्रतिष्ठा क्रियते। तादृशबिम्बस्य हानिः भवति चेत् सान्निध्यस्याऽपि हानिर्जायते। अतः देवालये बिम्बस्य अतीवप्राधान्यमस्तीति सिद्धम्। बृहज्जातकग्रन्थोक्तदिशा देवबिम्बस्य शुभाशुभचिन्तन विमर्शः अग्रे क्रियते।

राशिचक्रे द्वादशभावाः सन्ति। प्रश्नचिन्तनप्रभेदवशात् भावानां कारकपदार्थेषु अपि व्यत्ययः दृश्यते। बृहज्जातकग्रन्थे द्वादशभावचिन्तनप्रकारस्तु एवं भवति

"होरादयस्तनुकुटुम्बसहोत्थबन्धुपुत्रारिपत्निमरणानि शुभास्पदायाः रिःफाख्यम्"[1]

मानुषप्रश्ने लग्नादिभावेषु चिन्तनीयकारकपदार्थविचारः पूर्वोक्तश्लोकेनिरूपितमस्ति। देहः, कुटुम्बं, सहोदरः, बन्धुवर्गः, सन्तानम्, शत्रुः, भार्या, मरणं, शुभं, आस्पदं, आयः, तथा रिःफश्चेति लग्नादिद्वादशभावेषु चिन्तनीयविचाराः भवन्ति। मानुषप्रश्ने यथा लग्नभावेन शारीरिकचिन्तनं क्रियते तथैव देवप्रश्ने लग्नभावेन देवशरीरत्वेन यत् बिम्बं भवति तद् बिम्बचिन्तनं उक्तभावेन कर्तव्यम्। यथा

"लग्नाद्बिम्बमथाष्टमात्परिजनं" [2]। "सान्निध्यक्षेत्रबिम्बाणि"[3]

अतः इदं देवताबिम्बविचारः लग्नभावेन कर्तव्यमिति सिद्धम्। बिम्बस्य अवयवचिन्तनार्थं बृहज्जातकग्रन्थे मेषादिराशिवशात् शिरादिपादान्ताङ्गानि निरुपितानि सन्ति।

कालाङ्गानि वराङ्गमाननमुरो हृद्क्रोडवासोभृतो।
वस्तिर्व्यञ्जनमूरुजानुयुगले जङ्घेततोऽङ्घ्रिद्वयम्॥[4]

शिरः, आननं, उरः, हृत, उदरं, कटिः, वस्तिः, गुह्यप्रदेशः, ऊरुः, जानुयुगलम्, जङ्घे, पादौ एते क्रमेण मेषादिराशितः चिन्तनीयाङ्गविभागाः भवन्ति। उक्ताङ्गविभागानुसारं क्रमेण देवबिम्बस्य अङ्गविभागानां चिन्तनं क्रियते। अङ्गविभागसूचितराशौ उत भावे यदा अशुभदृष्टियोगादिसम्बन्धः भवति तदा देवबिम्बस्य तस्मिन् अङ्गे दोषः उत लक्ष्माणि वा वक्तव्यानि। बृहज्जातकग्रन्थे जातशिशोः अङ्गसम्बन्धिविचारणाचिन्तनसमये कथितश्लोकस्यान्वयः क्रियते।

"तस्मिन् पापयुते व्रणः शुभयुते दृष्टे च लक्ष्मादिशेत्"[5] इति

बिम्बभावस्य बलाबलानुसारं बिम्बस्य शुभाशुभचिन्तनं क्रियते। ज्यौतिषशास्त्रे बलाबलनिर्णयार्थं षड्बलषड्वर्गयोः उपयोगः क्रियते। भावस्य शुभाशुभचिन्तनं तु अनेनप्रकारेणाऽपि क्रियते,

---

[1] बृहज्जातकम् अ ०१, श्लो १५

[2] प्रश्नमार्गः अ २४, श्लो १४

[3] Ibid. अ २४, श्लो १८

[4] बृहज्जातकम् अ ०१, श्लो ०४

[5] Ibid. अ ०५, श्लो २५

"होरा स्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वीर्योत्कटा"[1]

भावाधिपः, गुरुः, तथा बुधः एतेषां योगो वा दृष्टिः, इतर ग्रहाणां रविकुजशनीनां योगदृष्ट्यादयः न भवन्ति चेत् तत् भावस्य पुष्टिर्वाच्या। पापग्रहाः स्वराशौ स्थिताः उत स्वराशिं पश्यन्ति चेत् तत् शुभाय कल्प्यते। तदेव प्रश्नमार्गे निरूपितमस्ति यत्

यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात् तस्य तस्याभिवृद्धिः।

पापैरेवं तस्य भावस्य हानिः निर्देष्टव्या प्रश्नतो जन्मतो वा॥[2] इति

अतः अनेन प्रकारेण भावस्य शुभाशुभस्थितिर्ज्ञातव्या इति शास्त्रवचनानुसारं सिद्धम्। बिम्बभावस्य पापग्रह-सम्बन्धेन जीर्णतादीनां दोषमादिशेत्।

जीर्णं संस्कृतमर्कजे क्षितिसुते दग्धं नवं शीतगौ

काष्ठाढ्यं न दृढं रवौ शशिसुते चानेकशिल्प्युद्भवम्।

रम्यं चित्रयुतं नवं च भृगुजे जीवे दृढं मन्दिरम्[3]

बिम्बभावे यदा शनिः स्थितश्चेत् बिम्बे जीर्णता विद्यते इति ज्ञातव्या। कुजश्चेत् बिम्बस्य अग्निस्पर्शनं जातमस्ति, चन्द्रश्चेत् नूतनबिम्बम्, रविः बिम्बस्य अदृढत्वम् एवञ्च काष्ठमयं बिम्बमिदं इत्यपि सूचयति। बुधश्चेत् शिल्पैः युक्तमनोहरबिम्बम्, शुक्रश्चेत् इदं बिम्बं नूतनमिति आदिशेत्। इतरग्रन्थेषु अपि विचारोऽयं निर्दिष्टोऽस्ति।

एवमेव बृहज्जातकग्रन्थोक्तश्लोकानां समन्वयः देवप्रश्नादिषु कर्तुं शक्यते। आचार्यवराहमिहिरस्य अर्थबाहुल्यप्रदर्शनमेव अत्र वैशिष्ट्यम् भवति। इतोऽपि बहवः श्लोकाः देवप्रश्नादिषु उपयोक्तुं शक्यन्ते। प्रश्नमार्गे निरूपिताः नैके श्लोकाः बृहज्जातके सन्ति। वस्तुतस्तु बृहज्जातकग्रन्थः प्रश्नमार्गादिग्रन्थानां मूलाधारग्रन्थत्वेन परिगण्यते। विना बृहज्जातकाध्ययनं फलादेशस्तु दुष्करः एव।

**सहायकग्रन्थाः**

1. श्रीनिवास आचार्यः (2014), प्रश्नमार्गः चन्द्रिकातात्पर्यटीका (कन्नडानुवादः), कब्याडी मठः, उडुपि, कर्नाटकराज्यम्
2. के. पि. शङ्करसोमयाजी (2008), तन्त्रसमुच्चयम् (कन्नडानुवादः), श्रीभगवत्पादप्रकाशनम्, स्वर्णवल्ली, उत्तरकर्णाटकम्
3. डा. सत्येन्द्रमिश्रः (2014), बृहज्जातकम् रुद्रविवरणी टीका,चौखम्बा सुरभारती प्रकाशनम्, वाराणसी

**Author's Details**

Address: Ph.D. Research Scholar
Dept. of Jyotisha,
National Sanskrit University,
Tirupati, A.P., India

****************************

[1] बृहज्जातकम्, ०१, श्लो १९

[2] प्रश्नमार्गः अ १४, श्लो २५

[3] बृहज्जातकम् अ ०५, श्लो १९

# पतञ्जलिदृष्ट्या अपादानकारकानुशीलनम्

# Analysis of the ablative case in the light of Patanjali

Anima Sahoo

**Abstract**

A thorough knowledge of grammar is required to consider the purity of a language. Therefore, grammar has been important in the discussion of language since ancient times. Lord Panini, the chief among grammars, removes the difficulty of grammar from the readers by his subtle and very subtle consideration of grammar subjects in his discipline of words. Therefore, cases are important in the topics discussed in grammar. There are many discussions in grammar based on cases. Lord Panini has criticized the six cases and the seven suffixes in his *Ashtadhyayi*. Panini made the notion of *apadana* by the formula *dhruvamapaye apadanam*. Besides this, he also made the method of deduction by other formulas. This research will reveal how Patanjali interpreted the formulas that legislate Panini's deduction in his commentary, depending on the sides and oppositions. In his *Mahabhashya*, Acharya Patanjali mentioned the seven Sutras composed by Panini for the legislation of the *Apadana*. And why he rejected the Seven Sutras, as well as what kind of criticism he has made about this have also mentioned in this research.

**कुञ्जीशब्दाः** – कारकम्, अपादानम्, पतञ्जलिः, महाभाष्यम्, ध्रुवम्।

****************************

अनादिकालतः भाषाचर्चायां पण्डितानां भिन्नं भिन्नं मतादर्शं दृश्यते। भाषा भावप्रकाशस्य उपयुक्तमाध्यमरूपेण व्यवह्रियते। भाषायाः शुद्धप्रयोगेण सम्यग्रूपेण भावविनिमय्यः सम्भाव्यते। भाषाचर्चया सह व्याकरणस्य अविच्छेद्य-सम्वन्धः अस्ति। व्याकरणस्य यथार्थज्ञानेन भाषायाः शुद्धत्वं अशुद्धत्वं वा अवगम्यते। वेदोत्तरकालादेव पवित्रवेदमन्त्राः सुष्ठुरूपेण पाठार्थं वेदाङ्गानां प्रचलनमभवत्। एषु षड्ढ वेदाङ्गेषु व्याकरणवेदाङ्गं प्रधानम् – **प्रधानं च षट्-स्वङ्गेषु व्याकरणम्**।[1] इदं तु वेदपुरुषस्य मुखरूपेण उच्यते - **शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्**।[2] व्याकरणं प्रकृति-प्रत्ययादिविभागेन शब्दानामनुशासनं करोति। व्याकरणमन्तरेण भाषाव्यवहारस्य साध्वसाधुप्रयोगनिर्णयः न विधीयते। प्राचीनकालतः बहवः वैयाकरणाचार्याः तेषां व्याकरणग्रन्थैः संस्कृतभाषाभाण्डारं समृद्धं कृतवन्तः। तेषु वैयाकरणेषु आचार्यः पाणिनिः तस्य व्याकरणग्रन्थमष्टाध्यायीं विरचय्य श्रेष्ठत्वमलभत। यतः पाणिनिप्रणीता अष्टाध्यायी सुसमृद्धा, सुसम्पन्ना, सर्वजनविदिता च, ततः विद्वांसः पाणिनिं मध्यबिन्दुं कृत्वा संस्कृतव्याकरणसम्प्रदायस्य त्रयविभागं कृतवन्तः-

१. प्राक् पाणिनिव्याकरणसम्प्रदायः।

२. पाणिनिसमकालिकव्याकरणसम्प्रदायः।

३. पाणिन्युत्तरवर्ती व्याकरणसम्प्रदायः।

---

[1] व्याकरणमहाभाष्यम्-दण्डिस्वामीदामोदराश्रमसम्पादितः-पृ.३५

[2] पाणिनीयशिक्षा-श्लोकसंख्या-४२

पाणिनिव्याकरणम् आधारीकृत्य कात्यायनः तस्य वार्तिकग्रन्थं, महर्षिः पतञ्जलिः तस्य महाभाष्यग्रन्थं च समृद्धं कृतवन्तौ। परवर्तिकाले पाणिनिव्याकरणमवलम्बनं कृत्वा बहवः वैयाकरणाः स्वमतानि प्रदत्तवन्तः। संस्कृतव्याकरण-शास्त्रे त्रिमुनि-व्याकरणस्य तृतीयव्याकरणग्रन्थ: महाभाष्यम्। पाणिनीयसम्प्रदायस्य वैयाकरणेषु पतञ्जलेः प्रभावमत्यधिकं दृश्यते। महाभाष्यग्रन्थः सर्वेषां न्यायबीजानां संग्रहः भवति।[1] व्याकरणशास्त्रे मुनित्रयस्य शास्त्रविषये यथोत्तरं मुनीनां प्रामाण्यम् एतादृश: व्यावहार: वर्तते। उक्तप्रामाण्यानुसारे भगवान् पतञ्जलिरेव उत्तरतमोऽवधिभूतः। अतः महाभाष्यकारमतमादायैव व्याकरणसिद्धान्ताः स्वीकृताः भविष्यन्ति। महामुनिपाणिनेः अष्टाध्यायी अत्यन्तं विस्तृतं दुर्बोध्यं गाम्भीर्यपूर्णं च। भगवान् पतञ्जलिः तस्य महाभाष्यं विरचय्य व्याकरणजिज्ञासूनां कृते महान्तमुपकारकम् अकरोत्। सः तस्य शब्दानुशासने पाणिन्युक्तान् विषयान् सरलतया स्पष्टं कृतवान्। पाणिनीयव्याकरणसम्प्रदाये अस्य ग्रन्थस्य प्राधान्यं वर्तते। भारतीयपरम्परानुसारेण भाष्ये पक्षत्रयं विद्यते यथा- पूर्वपक्षी, सिद्धान्तैकदेशी तथा सिद्धान्ती।[2]

व्याकरणशास्त्रे पाणिन्युक्तविषयेषु कारकमत्यन्तं गुरुत्वपूर्णमस्ति। इदं तु व्याकरणशास्त्रस्य हृदयभूतम्। हृदयपरिशीलनं हृदयचिकित्सां च वैद्याः सावधानेन मनसा कुर्वन्ति। तथैव कारकमपि अवहितेन चित्तेन अवधारणीयं बोधनीयं च।[3] पाणिनिः स्वकीयतन्त्रे षट् कारकाणि सप्तविभक्तयश्च प्रणीताः। आचार्यः पाणिनिः कारकपर्यालोचनायाः प्रारम्भे 'कारके'[4] – इति सूत्रे कारकसंज्ञां प्रयच्छति। परन्तु कारकास्यार्थं कुत्रापि न उक्तवान्। सः 'कारके' इति सूत्रम् अधिकारसूत्ररूपेण स्वीकृतवान्। पुनः महाभाष्यकारः अस्य सूत्रस्य महतीसंज्ञां स्वीकरोति। षट् कारकाणि तु कर्तृकारकं, कर्मकारकं, करणकारकं, सम्प्रदानकारकं, अपादानकारकं, अधिकरणकारकं च। आचार्यपाणिनिः अपादान-सम्प्रदान-करण-अधिकरण-कर्म-कर्ता इति क्रमेण कारकाणि प्रयच्छति। अष्टाध्याय्यां कारकेषु आदौ अपादानकारकविषये आलोचना दृश्यते। तत्र भगवान् पाणिनिः अष्टसूत्रैः तथा वार्तिककारः कात्यायनः एकेन वार्तिकेन अपादानकारकस्य पर्यालोचना कृता। परवर्तिवैयाकरणाः तानि सूत्राणि अधिकृत्य अपादानकारकविषयकसिद्धान्तान् प्रदत्तवन्त:। महाभाष्यकारः पतञ्जलिः पाणिनेः अपादानविधायकानि सर्वाणि सूत्राणि स्वीकरोति न वा इति, तत् अस्मिन् शोधकार्ये स्पष्टं भविष्यति। पुनः सः पक्षविपक्षावलम्बनेन अपादानकारकस्य कीदृशीं व्याख्यां कृतवान् तथा अपादानस्य स्वरूपविषये तस्य सूक्ष्मातिसूक्ष्मं पर्यवेक्षणम् अनेन शोधकार्येण भविष्यति। येन शोधकार्येण शिक्षार्थिनां तथा व्याकरणजिज्ञासुजनानां अपादानकारक-सम्बन्धिन: संशयाः दूरीभूताः भविष्यन्ति।

**अपादानकारकस्य स्वरूपम्** – अपपूर्वकम् आङ् पूर्वकं दानार्थकाद् दा धातोरुत्तरं भाववाच्ये ल्युटि प्रत्ययात् अपादानपदमिति निष्पद्यते। अपादीयते विश्लिष्यते पृथक क्रियते वा। अर्थात् यस्माद्वस्तुनो वस्त्वन्तरस्य चलनं भवति, यस्मात् कस्यचन वस्तुनः ग्रहणं विश्लेषणं वा भवति तदपादानं भवति। आचार्यपाणिनिः अपादानकारकविषयकं सूत्रं

[1] कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना। सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने।। (वाक्यपदीय-२/४८)

[2] पाणिनीयव्याकरणस्य भाषावैज्ञानिकमध्ययनम् – शशिभूषणमिश्रः, पृ.१६

[3] कारकम् – जि. महाबलेश्वर भट्टः, प्रस्तावनांशः

[4] अष्टाध्यायी- १.४.२३

करोति- 'ध्रुवमपायेऽपादानम्'।[1] सूत्रमिदं 'कारके' सूत्राधिकारे पठितम्। अपायः पदस्य अर्थः विश्लेषः वियोगः वा। पुनः ध्रुवं पदस्य अर्थः अवधिः अर्थात् यस्माद् अपायः विच्छेदः वा प्रारभते। ध्रुवः पदस्य स्थिररूपसामान्यार्थः दृश्यते। महाभाष्यकारः अपि स्थिररूपार्थं स्वीकरोति। अतः संयुक्तात् यदा यस्य चलनं भवति तदा तस्य अपायः। यस्मात् अपायः भवति सः अवधिः। सूत्रस्य वृत्तौ दीक्षितेन उच्यते- 'अपायः विश्लेषः। तस्मिन् साध्ये ध्रुवम् अवधिभूतं कारकमपादानं स्यात्'। विश्लेषे साध्ये अवधिभूतं कारकम् अपादानम् स्यात् इति सूत्रार्थः। यथा- वृक्षात् पर्णं पतति। अत्र पत् धातोः अर्थः अधःसंयोगरूपं क्रिया। पर्णवृक्षयोः विभागजनकपतनक्रियाश्रयः पर्णम्। पुनः अवधिभूतः विभागाश्रयः वृक्षः। अतः अविचलितस्य वृक्षस्य अपादानसञ्ज्ञा सिध्यति।

महाभाष्यकारः पतञ्जलिः अत्र ध्रुवशब्दस्य प्रयोजनविषये प्रश्नमुत्थापयति- 'ध्रुवग्रहणं किमर्थम्?' यदि अपादानलक्षणविधायकसूत्रे ध्रुवशब्दस्य प्रयोगः न स्यात्, तर्हि अपायस्य विश्लेषस्य वा साधकमात्रमेव अपादानसंज्ञा स्यात्। यथा- 'ग्रामात् आगच्छति शकटेन' अस्मिन् वाक्ये ग्रामात् अपायस्य साधनमेव शकटम्। अतः शकटपदस्य अपादानत्वमपि स्यात्। परन्तु अत्र ध्रुवपदस्य अपादानत्वे सति, शकटस्य अध्रुवत्वे अपादानसंज्ञा न भवति। केवलं ग्रामपदस्य अपादानत्वं सिद्धति। अपि च ध्रुवपदस्य अप्रयोगेऽपि शकटस्य अपादानत्वं न सिद्धति, यतः शकटं आगमनक्रियायाः साधकरूपेण कार्यं करोति ततः तत्र 'विप्रतिषेधे परं कार्यं'- न्यायानुसारेण 'साधकतमं करणम्'[2]-सूत्रानुसारेण करणसंज्ञा भवति। तथैव ग्रामादागच्छन् कंसपात्र्यां पाणिनौदनं भुङ्क्ते इत्युदाहरणे कंसपात्री इत्यस्यापि अपादानसंज्ञा प्राप्नोति, परन्तु अस्य पदस्य अध्रुवत्वे सति पुनः अधिकरणसंज्ञा बाधिकारूपेण प्राप्ता तथा सति अत्र अपादानसंज्ञा न भूत्वा अधिकरणत्वं सिध्यति। ध्रुवपदस्य प्रयोजनविषये भाष्यकारः पुनः प्रत्युदाहरणं प्रयच्छति – वृक्षस्य पर्णं पतति। अत्रापि पतनक्रिया हेतोः अपायस्य प्रतीतिर्भवति। किन्तु वृक्षात् पर्णस्य अपायस्य विवक्षा अत्र नास्ति। लौकिकदृष्ट्या यद्यपि अपाय: विश्लेष: वा भवति तथापि वृक्षशब्दस्य अध्रुवत्वे सति अत्र अपादानत्वं न सिध्यति।

वैयाकरणैः ध्रुवशब्दस्य स्थिरः अचलः वा अर्थः गृहीत: एवं गते सति 'वृक्षात् पत्रं पतति'- अत्र अपादानत्वं सिध्यति। किन्तु 'धावतोऽश्वात् पतति' - अत्र केन प्रकारेण अपादानसंज्ञा भवति? अश्वः न स्थिरः। अश्वस्य अपादानसिद्धत्वं ध्रुवस्य स्थिरमित्यर्थम् अगृहीत्वा अवधिभूतम् इति अर्थ: स्वीक्रियते। स्थिरम् इत्युक्ते सति चलनात्मकः अश्वः अपादानसंज्ञः न भवति। अत्र ध्रुवपदस्य आपेक्षिकस्थिरत्वमिति ग्रहणीयम्। भाष्यकारः उच्यते – "अध्रौवस्याविवक्षितत्वात्। नात्राध्रौव्यं विवक्षितम्। किं तर्हि? ध्रौव्यम्। इह तावदश्वात्त्रस्तात् पतित इति यत्तदश्वेऽश्वत्वमाशुगामित्वं तद् ध्रुवं तच्च विवक्षितम्।"[3] पुनः अपसरतो मेषात् अपसरति मेषः- अत्र मेषोद्वयं चलमानम् अस्थिरं वा। अतः अत्र आपेक्षिकस्थिरत्वेन अपादानत्वं न सिद्धति। अत्र एकस्य मेषस्य वियोगे द्वितीयस्य मेषस्य,

---

[1] अष्टाध्यायी- १.४.२४

[2] Ibid. १.४.४२

[3] Ibid. १.४.२४

द्वितीयमेषस्य वियोगे प्रथममेषस्य वियोग: सम्भवति, इत्यतः द्वयोः मेषयोः अपादानत्वं भवति। दीक्षितः अत्र ध्रुवपदस्य अवधिभूतम् अर्थं प्रयच्छति। अतः परस्परावधित्वेन अपादानसंज्ञा भवति।[1] वाक्यपदीये तदुक्तम्-

अपाये यदुदासीनं चलं वा यदि वाचलम्।
ध्रुवमेवातदावेशात् तदपादानमुच्यते॥
पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते॥
मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक्॥[2]

अतः स्थिरत्वे अस्थिरत्वे सति यस्मात् विच्छेद: भवति तस्य अपादानसंज्ञा भवति। विच्छेद: प्रत्यक्ष-परोक्षभेदेन द्विप्रकारक:। अतः अपादानमपि द्विविधं- प्रत्यक्षम बौद्धं च।

**पतञ्जलेः सप्तसूत्रीप्रत्याख्यानम् -** 'ध्रुवमपायेऽपादनम्'- इति सूत्रेण पाणिनिः अपादानसंज्ञाविधानं कृतवान्। एतदतिरिक्तं अपादानसंज्ञाविधानं कर्तुं सः कानिचन विशेषसूत्राणि प्रणीतवान्, तत्र कात्यायनस्य वार्तिकमपि अन्तर्भुक्तमस्ति। परन्तु पतञ्जलिः पाणिनिकृतानि तानि सूत्राणि न स्वीकरोति। तस्य मते एतेषां सूत्राणां काऽपि आवश्यकता नास्ति। पतञ्जलिना प्रत्याख्यातानि सूत्राणि यथा -

**भीत्रार्थानां भयहेतुः (१.४.२५)** - भयार्थानां त्राणार्थानां धातूनां च प्रयोगे भयहेतुरपादानं स्यात् इति सूत्रार्थः। यथा- चौरात् बिभेति, चौरात् त्रायते प्रभृतयः। अत्र भयहेतुः चौरशब्दस्य अपादानसंज्ञा भवति। भाष्यकारमते तु अस्य सूत्रस्य आवश्यकता नास्ति। सः आह- 'इह तावद् वृकेभ्य: बिभेति, दस्युभ्यो बिभेतीति,य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति, यदि मां वृकाः पश्यन्ति ध्रुवो मे मृत्युरिति। स वुद्ध्या सम्प्राप्य निवर्तते। तत्र ध्रुवमपायेऽपादानमित्येव सिद्धम्।'[3] अर्थात् पतञ्जलिमतानुसारेण बुद्ध्या भय-त्राणार्थानां हेतुः आगच्छति पुनः बुद्ध्या निवर्तयति।

**पराजेरसोढः (१.४.२६)** - परा- जि धातोः प्रयोगे असह्योऽर्थोऽपादानं स्यात्। यथा- अध्ययनात् पराजयते। अत्र ध्रुवमपायेऽपादानम् इति सूत्रेणैव पराजयस्य अवधित्वेन अध्ययनम् अपादानं भवति। भाष्यकारः उच्यते- 'य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति दुःखमध्ययनं दुर्धरं च, गुरवश्च दुरुपचारा इति। स बुद्ध्या सम्प्राप्य निवर्तते। तत्र ध्रुवमपायेऽपादानमित्येव सिद्धम्।'[4] यतः अत्रापि बौद्धिकम् अपादानत्वं सिध्यति ततः इदं सूत्रं न दृष्टप्रयोजनम्।

**वारणार्थानामीप्सितः (१.४.२७)-** वारणार्थक् धातोः योगे ईप्सितोऽर्थोऽपादानं स्यात्। यथा- यवेभ्यः गां वारयति। अत्र यव: परकीयोऽपि ईप्सितो भवति, यतः गोस्वामी आत्मनः चिन्तयति यदि गौः यवं नाशयति चेत् तत्

[1] सिद्धान्तकौमुदी-कारकप्रकरण-डः सच्चिदानन्द मुख्योपाध्याय, पृ. १०१

[2] वाक्यपदीयम्- ३.७.१३९-१४१

[3] महाभाष्यम्- १.४.२५-२१

[4] Ibid. १.४.२६-२२

अधर्मः भवति। पुनः राजदण्डस्य आशङ्का अपि अस्ति। गोस्वामिनः मनसि बुद्धौ वा एतादृशे चिन्तने प्राप्ते सति सः गां वारयति। अतः बौद्धिक: अपायः स्वीकर्तुं ध्रुवमपायेऽपादानम्- इति सूत्रेण यवपदस्य अपादानत्वं सिद्धति। भाष्यकारमते- 'अयमपि योगः शक्योऽवक्तुम्। कथं माषेभ्यो गां वारयति ? पश्यत्ययं यदीमा गावस्तत्र गच्छन्ति, ध्रुवं शस्यविनाशः, शस्यविनाशेऽधर्मश्चैव राजभयं च। स बुद्ध्या सम्प्राप्य निवर्तयति। तत्र ध्रूवमपायेऽपादानमित्येव सिद्धम्।'[1]

**अन्तर्धौ येनादर्शनमिच्छति (१.४.२८)-** अत्र अन्तर्धौ येनार्दशनमिच्छति अर्थात् कर्ता यस्मात् दृष्टिपथात् अन्तर्धानमिच्छति तत्र अपादानं भवति। यथा- उपाध्यायात् अन्तर्धत्ते। भाष्यकारः उच्चते- 'अयमपि योगः शक्योऽवक्तुम्। कथमुपाध्यायादन्तर्धत्त इति? पश्यत्ययं यदि माम् उपाध्यायः पश्यति ध्रूवं मे प्रेषणामुपालम्भो वेति। स बुद्ध्या सम्प्राप्य निवर्तते।'[2] अतः अत्रापि 'ध्रुवमपायेऽपादानम्' – इति सूत्रेण अपादानत्वं सिध्यति।

**आख्यातोपयोगे (१.४.२९)** – आख्याता इत्यस्य अर्थः वक्ता। उपयोगः इत्यस्य नियमपूर्वकः विद्यास्वीकारः इति भाष्यकारः। अत्र वक्ता अध्यापनकर्ता आचार्यः भवति। उपाध्यायात् अधीते - अत्र विधिप्रकारेण उपाध्यायस्य मुखनिसृतात् विद्यास्वीकारे वक्तु: उपाध्यायस्य अपादानसंज्ञा भवति। भाष्यकारः ब्रवीति - 'अयमपि योगः शक्योऽवक्तुं। अपक्रामति तस्मात् तदध्ययनम्। यद्यपक्रामति, किं नात्यन्तायापक्रामति। सन्तततत्वात्। अथ वा ज्योतिर्वज् ज्ञानानि भवन्ति।'[3]

**जनिकर्तुः प्रकृतिः (१.४.३०)-** जनि इत्यस्य जननमित्यर्थः। जनिकर्ता इत्यस्य जायमानः इत्यर्थः। प्रकृतिः इत्यस्य हेतुरित्यर्थः। जायमानस्य हेतुरपादानं स्यात् इति सूत्रार्थः। यथा - गोमयात् वृश्चिकः जायते। भाष्यकारमते अत्र अपाय अस्ति,अतः 'ध्रुवमपायेऽपादानम्'- सूत्रेण अपादानत्वं भवति।[4]

**भुवः प्रभवः (१.४.३१)-** प्रथमप्रकाशस्थानम् अपादानं भवति। हिमवतो गङ्गा प्रभवति इत्युदाहरणे हिमवति गङ्गायाः प्रथमप्रकाशस्थानम्, तर्हि अपादानं भवति। भाष्यकारमते हिमवतो गङ्गा प्रभवति इत्यस्य हिमवतः अपाक्रामतीत्यर्थः। अपक्रामति तास्तस्तमादापः। अपक्रमणं विश्लेषणं वा। एतीदृशविश्लेषस्य अवधिभूतः भवति हिमवान्। अतः 'ध्रुवमपायेऽपादानम्'- सूत्रेण अपादानत्वं भवति। अस्य सूत्रस्य प्रयोजनं नास्ति।[5]

सप्तसूत्रेभ्य: अतिरिक्तं वार्तिकमेकं दृश्यते- **'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्'**- जुगुप्सा- विराम-प्रमादार्थानां धातूनां प्रयोगे अपादानं भवति इत्यर्थः। यथा- धर्मात् विरमति, अधर्मात् जुगुप्सते प्रभृतयः। भाष्यकारः वार्तिकमिदं न स्वीकरोति। तस्य मते उक्तोदाहरणेषु **'ध्रुवमपायेऽपादानम्'** इति सूत्रेण अपादानत्वं भवति। अतः वार्तिकमिदं निष्प्रयोजनम्।[6]

---

[1] महाभाष्यम्- १.४.२७-२६

[2] Ibid. १.४.२८-२८

[3] Ibid. १.४.२९-३०

[4] Ibid. १.४.३०-३१

[5] Ibid. १.४.३१-३२

[6] Ibid. १७

अतः दृश्यते पतञ्जलिः पाणिनिकृतम् **'ध्रुवमपायेऽपादानम्'**- इति सूत्रातिरिक्तं सप्तसूत्राणि वार्तिकमेकं च प्रत्याख्यातवान्।

**उपसंहारः -** महर्षिः पाणिनिः अपादानकारकस्य स्वरूपवर्णनाकाले **'ध्रुवमपायेऽपादानम्'** – इति सूत्रेण अपादानस्य संज्ञाविधानं कृतवान्। पुनः सप्तसूत्राणि विरचय्य तैः सूत्रैः अपादानकारकस्य प्रयोगस्थानं स्पष्टं कृतवान्। पाणिनिसम्प्रदायस्य वैयाकरणाः तानि सूत्राणि अधिकृत्य तेषां ग्रन्थे अपादानकारकविधानं कृतवन्तः। पाणिनिः यद्यपि अपादानविधायकसूत्राणि निर्दिशति तथापि भाष्यकारः पतञ्जलि सर्वसूत्राणि न स्वीकरोति। तस्य मतानुसारेण एतेषां सूत्राणाम् आवश्यकता नास्ति। यत्र बौद्धिकोपायेन 'ध्रुवमपायेऽपादानम्' इति सूत्रेण अपादानत्वं सिद्धति तत्र एतेषां सूत्राणां किमपि प्रयोजनं नास्ति। यद्यपि पतञ्जलिः सप्तसूत्राणां प्रत्याख्यानं कृतवान् तथापि अन्ये वैयाकरणाः पाणिनेः निर्देशान् स्वीकृतवन्तः।

**<u>सहायकग्रन्थाः</u>**

1. आश्रम, दामोदर(सम्पा.), १९२५, व्याकरणमहाभाष्य(पस्पशाह्निक), कलकाता।
2. गङ्गोपाध्याय, मृणालकान्ति, २०१८, व्याकरण महाभाष्ये कारकाह्निक, संस्कृत बुक् डिपो, कलकाता।
3. चतुर्वेदी, शर्मा, गिरिधर, शर्मा, नन्द(सम्पा.), २०१०, वैयाकरणसिद्धान्तकौमुदी, मोतिलालबनारसी दास, दिल्ली।
4. झा, कलानाथ, १६६६, कारकदर्शनम्, चौखाम्बा विद्याभवन, वाराणसी,।
5. झा, महेश- महाभाष्य (पतञ्जलि)- संस्कृत शोधसंस्थानम्, दरभङ्गा।
6. पतञ्जलिः, १९८७, व्याकरणमहाभाष्यम् (कैयटकृत प्रदीप एवं नागेशकृत उद्योत टीका सहित चौखाम्बा संस्कृत प्रतिष्ठान।
7. पतञ्जलि, २००१, व्याकरणमहाभाष्यम्, प्रतिभाप्रकाशन, दिल्ली।
8. पाणिनिः, १९९७, अष्टाध्यायी, चौखाम्बा सुरभारती प्रकाशन, वाराणसी।
9. भट्टाचार्य, तपनशङ्कर(सम्पा.), २०१७, पाणिनि प्रणीत अष्टाध्यायी, संस्कृत बुक् डिपो, कलकाता।
10. मिश्र, शशीभूषण, २०१२, पाणिनीयव्याकरणस्य भाषावैज्ञानिकाध्ययनम्, बनारसमार्केन्टाइल, कलकाता।
11. मिश्र, वेदपति, १९७०, व्याकरण वार्तिक एक समीक्षात्मक अध्ययन,पृथिवी प्रकाशन्।
12. मुख्योपाध्याय, गोविन्दगोपाल, २००८, ए निउ त्रि- लिङ्गुयाल डिक्सनरि, संस्कृत बुक् डिपो, कलकाता।
13. मुख्योपाध्याय, सच्चिदानन्द(सम्पा.), २००९, सिद्धान्तकौमुदी(कारक प्रकरण), साहित्य निकेतन, कलकाता।
14. लाहिडि, प्रबोधचन्द्र, शास्त्री, हृषीकेश, २०११, पाणिनीयम्, दि ढाका स्टुडेन्टस् लाइब्रेरी, कलकाता।
15. शर्मा, उमाशंकर, २०११, संस्कृतव्याकरण मे कारक तत्त्वानुशीलन, चौखाम्बा सुरभारती प्रकाशन, वाराणसी।
16. शर्मा, गिरिधर, शर्मा, परमेश्वरानन्द(सम्पा.),२०१४,वैयाकरणसिद्धान्तकौमुदी(कारकप्रकरणम्), मोतिलाल बनारसीदास, वाराणसी।
17. शर्मा,रघुनाथ(सम्पा.),२०१६, वाक्यपदीयम्(वाक्यकाण्ड,अम्वाकर्त्री), सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी।
18. शुक्ल, सूर्यनारायण(सम्पा.), संवत् २०५९, वाक्यपदीयम् (ब्रह्मकाण्ड), चौखाम्वा संस्कृत संस्थान्, वाराणसी।

**<u>Author's Details</u>**

Address: Research Scholar
Department of Sanskrit,
Raiganj University, West Bengal-733134, India.

****************************

# योगदर्शनानुसारं पुरुषार्थचतुष्टयस्य विश्लेषणात्मकम् अध्ययनम्

# Analytical study of *Puruṣārtha-Catuṣṭaya* according to Yogic Philosophy

Dr. Nehal Narendra Kumar Dave

**Abstract**

Man is born for (purusharth). (Purusharth) is the goal of life. The importance of Purusharth Chatushtaya is not only from the point of view of philosophy, but also from the social point of view. That Purusharth Chatushtaya alone renders the purpose of life and the significance of social life. It helps to bring out the best in humanity. Purusharth Chatushtaya has a direct relation with the ashram system as well. It is Purusharth Chatushtaya that holds the psychological basis of the ashram system. Only Purusharth Chatushtaya communicates morality. Whatever is the thought of Purusharth, it is implemented in the ashram system by being embodied. Ashram system is respectively related to the main events of life. This is where rituals are needed. That is, for the implementation of the vast idea of Purusharth Chatushtaya, the ashram system has been created and the implementation of the ashram system gradually arranges for the sixteen rituals.

That is, the complete understanding of any subject is based on its paragraphs, but the basis of those paragraphs are the words. Similarly, the subject - Purusharth is Chatushtaya, which is divided into Ashram system-like Paragraphs, those paragraphs are also covered with sacramental (Sanskaras) words. Here we will discuss Purusharth Chatushtaya according to Yoga Shastra, so that the relation of Purusharth Chatushtaya with Yoga Shastra can be clear. These Purusharths are very important in physical form, social form, practical form, and in spiritual form. Yoga Shastra also always proves its importance in these aspects. Therefore, the relationship between Purusharth Chatushtaya and Yoga is clear. But in which texts of Yogashastra, where, in which context, and why the description of Purusharth Chatushtaya is found, this is a matter of particular concern. Therefore, the analytical analysis is being done here.

Keywords - For fold goal of human, Objectives of men, the inherent values of the universe, Dharma Artha Kam and Moksha, Dharma (righteousness) Artha (economic values), Kama (pleasure), and Moksha (liberation), धर्मः,अर्थः, कामः, मोक्षः, योगशास्त्रे पुरुषार्थचतुष्टयम्, योगसूत्रे पुरुषार्थचतुष्टयम्, चाणक्यस्य अर्थशास्त्रम्

****************************

पुरुषार्थस्य उद्देश्यम् अतीव सरलं, प्रत्यक्षं च वर्तते। १) अनन्तभोगः उत २) पुरुषार्थसाधनेन कैवल्यप्राप्तिः। यदि पुरुषः (मनुष्यः) एतस्मिन् संसारे, आमुष्ये च सुखप्राप्त्यै भोगापवर्गरूपिणं (भौतिक-स्वर्गसुखरूपं) पुरुषार्थं सततं कर्तुम् इच्छति, तर्हि सः अविरतं कर्तुं प्रभवति। परन्तु एष एव पुरुषार्थः कैवल्यप्राप्तौ अपि तस्य पुरुषस्य सहायकः भवति, यदि कैवल्य-वाञ्छुः सः एतेषां धर्मादि-पुरुषार्थानाम् अपि त्यागं कृत्वा सर्वप्रकारकेभ्यः गुणेभ्यः मुक्तः भविष्यति, तर्हि सः पुरुषः स्वरूपे प्रतिष्ठितः भविष्यति। अतः उक्तम् – पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति॥[1] पुरुषार्थस्य विशालव्यापे मनुष्यस्य सम्पूर्णं जीवनम् आवृत्तम् अस्ति, परन्तु सः पुरुषार्थः पूर्णतया कैवल्यस्य विशाले व्यापे अन्तर्भवति। अतः पुरुषार्थाय कृताः सर्वेऽपि प्रयासाः भोगेन सह कैवल्यं प्रति अपि नयन्ति इति

[1] पातञ्जलयोगसूत्रम्, कैवल्यपादः, सूत्रम् - ३४

एकबाणेन लक्ष्यद्वयाय कार्यं भवति, परन्तु अन्ते कैवल्यलक्ष्यभेदनाय बाणलोपः अत्र वैशिष्ट्यम्। यतः – तत्प्रधानस्य कैवल्यं पुरुषविशेष उपचर्यते।[1] शब्दार्थः – पुरुष+अर्थः इत्यत्र पुरुषशब्दस्य व्यत्पत्तिः "पुरि शेते इति पुरुषः"। पूः = पुरं, देहः च इति सौभरिकृतायां एकार्थनाममालायां प्राप्यते। यथा – पुः पुत्रः पूः पुरं देहः पेः पेशी पैश्च गालवः। पोः पौत्रः पौः पुमान्भूमिः पं प्रीणनमृणं पयः॥[2]

संस्कृत-भाषा काचित् स्पन्दनात्मिका भाषा वर्तते, अत एव प्रत्येकं शब्दः रूढे सत्यपि गभीरार्थं धरते। अत्र वास्तव्येन शब्दस्य सारः गुम्फितः भवति। पुरुषार्थचतुष्टयस्य सामान्यार्थः अस्ति – चत्वारः पुरुषार्थाः इति। धर्मः (The principle of righteousness = Duty), अर्थः (Wealth), कामः (Please or Desire), मोक्षः (Salvation) च चत्वारः पुरुषार्थाः। अतः एते आत्मलक्ष्यम् उत Self-purpose उच्यते। परन्तु पुरि (पुरे सप्तमी.एक.) यः शयनं करोति उत अवस्थितः अस्ति, सः चैतन्यांशः जीवः एव "पुरुषः" (Pure Consciousness) उच्यते। अनेन पुरुषशब्दस्य यौगिकार्थः जीवः इति भवति। परन्तु जीवः इत्युक्तेन सर्वे जीवाः न अन्तर्भवन्ति, तस्य अर्थः केवलं मनुष्यः इत्येव सिध्यति, यतः श्रीमद्भागवते अपि पुरुषशब्दस्य योगरूढता मनुष्यसम्बद्धा अस्ति। यथा – "पुरुषत्वे चाविस्तरामात्मा", "पुरुषत्वे च मां धीराः", "बह्व्यः सन्ति पुरः सृष्टास्तासां मे पौरुषी प्रिया"[3] "पुरं पुरुषमात्मवान्"[4] इत्यादयः उल्लेखाः प्राप्यन्ते। अत्र मनुष्यः इत्युक्ते मनुष्ययौनौ उत्पन्नाः – नराः, नार्यः, उभयलिङ्गिनः च। अर्थात् पुरुषार्थचतुष्टयस्य सम्पादनक्षमता केवलं मनुष्ये एव अस्ति इति। उक्तञ्च –

बुद्धीन्द्रिय-मनःप्राणान् जनानामसृजत् प्रभुः।
मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च॥[5]

अर्थात्, परमात्मा प्राणिभ्यः बुद्धेः, इन्द्रियस्य, मनसः, प्राणानां च निर्माणम् अकरोत्। ते प्राणिनः प्राणैः जीवनधारणम्, इन्द्रियैः सच्छास्त्रश्रवणं, मनसा तत्त्वचिन्तनं, मननञ्च, बुद्ध्या तत्त्वनिश्चयोत्तरम् आत्मनः साक्षात्कारं च कर्तुं शक्नुयुः।

पुरुषार्थ-शब्दे अर्थ-शब्दस्य व्युत्पत्तिः भवति यत् – "अर्थ्यते प्रार्थ्यते सर्वैः इति अर्थः" इति। अर्थात्, अभिलषितानि फलानि (विषयाः) अर्थः इति सम्बोध्यन्ते। अन्ते पुरुषाणां (मनुष्याणां) कृते अभिलषिताः विषयाः पुरुषार्थाः इति अर्थः प्राप्यते। एवं पुरुषेभ्यः आसंसारं ये केऽपि अभिलषिताः विषयाः सन्ति, ते तु अनन्ताः भवन्ति। परन्तु लक्ष्याधारेण ते अनन्ताः विषयाः द्वयोः भागयोः विभक्ताः सन्ति। यतः सत्स्वरूपमज्ञानम् (तत्त्वबोधः, कारणशरीरस्य व्याख्या।) इति सिद्धान्तः वर्तते, अतः पुरुषः आत्मसुखस्य प्राप्त्यै प्राकृतिकतया बाह्यविषयेषु सुखकामनां

---

[1] पातञ्जलयोगसूत्रम्, कैवल्यपादः, सूत्रम् – ३४, मणिप्रभाटीका

[2] सौरभिकृता एकार्थनाममाला, श्लो. ७० https://sa.wikisource.org/wiki/एकार्थनाममाला

[3] Shastri, 1999, P. 641) (श्रीधरस्वामिनः भावार्थबोधिनीनाम्ना संस्कृतटीका, स्कन्धः – ११, पृ. ६४१

[4] श्रीधरस्वामिनः भावार्थबोधिनीनाम्ना संस्कृतटीका, स्कन्धः – ३, अध्यायः – २० श्लो. ५०, पृ. १३१

[5] श्रीमद्भागवतमहापुराणम् – १०-८७-२

करोति। एवं सुखं द्विविधम् अभवत्। १) विषयसुखम् (कामः) – विषयैः सह ऐन्द्रिकसंसर्गात् दुःखमिश्रितं सुखं पुरुषः अनुभवति। २) आत्मसुखम् (मोक्षः) – परन्तु विषयसुखेभ्यः अतृप्तः यदा देहेन्द्रिभ्यः विरमः पुरुषः शुद्धात्मस्वरूपं जानाति, तदा आत्मसुखम् अनुभवति। तस्मिन् सुखे "मनोबुद्ध्यहङ्कारचित्तानि नाऽहं... चिदानन्दरूपः शिवोऽहं शिवोऽहम्"[1] इति तस्य बोधः भवति। सः आत्मबोधः/ब्रह्मानन्दः उच्यते। अनेन स्पष्टं भवति यत्, पुरुषः ऐन्द्रिकसुखम् इच्छति, आत्मसुखं वा इच्छति। यावत्पर्यन्तम् आत्मसुखं न प्राप्यते उत आत्मसुखाय परिपक्वता न भवति, तावत्पर्यन्तं सः ऐन्द्रिकसुखे परिभ्रमति। अत एव प्राणायामे उत हठयोगेऽपि सुखानुभूतिः प्रेरका भवति।[2] तयोः अभिलषितार्थयोः काम-मोक्षयोः साध्ययोः द्वे साधने स्तः – धर्मः, अर्थः च। कामपुरुषार्थस्य द्वे अङ्गे धर्मः, अर्थः च स्तः। एवं धर्मः, अर्थः, कामश्च त्रिवर्गः, यः अभ्युदयत्वेन अपि प्रसिद्धः अस्ति। यतः संसारे मनुष्यस्य अभितः उदयः (सर्वपक्षतः उदयः) अभ्युदयः उच्यते। अभ्युदये धर्मः श्रेष्ठः इत्युक्तं कामशास्त्रे – एषां (अभ्युदायानां) समवाये पूर्वः पूर्वो गरीयान्[3] इति। योगशास्त्रस्य कृतेऽपि पुरुषार्थचतुष्टयं व्रतम् अस्ति, यस्य पालनं योगमार्गे सहायकं भवति। यथा-

प्रसन्नगुरुणा पूर्वमुपदिष्टोऽभ्यनुज्ञया।
धर्मार्थकामसिद्ध्यर्थमुपायग्रहणं व्रतम्॥[4]

अर्थात्, प्रसन्नचित्तेन गुरुणा पूर्व-प्राप्त-उपदेशस्य, आज्ञायाः च अनुसारं धर्मस्य, अर्थस्य, कामस्य च सिद्ध्यै अनुष्ठानस्य आचरणम् एव व्रतम् उच्यते।

अनेन अभ्युदयेन सह चतुर्थस्य पुरुषार्थस्य संयोजनम् आवश्यकं मन्यते। सः चतुर्थः पुरुषार्थः मोक्षः अपि निःश्रेयसः उच्यते। अर्थात् मोक्षात् परे कोऽपि निःश्रेयसः नास्ति उत संसारे केवलं मोक्षः एव निःश्रेयसः अस्ति। अतः धर्मस्य, अर्थस्य, कामस्य च उपार्जनं मोक्षाय एव करणीयम्। यतः सकामः धर्मः, त्यागशून्यः अर्थः, अतिकामः च मोक्षं प्रति न नयति। मोक्षाय कृतः धर्मः, अर्थः, कामः च पुरुषस्य वास्तविकः पुरुषार्थः अस्ति।

अभ्युदयाय सर्वेषां कार्याणि साधनानि च।
निष्कामधर्मयुक्तो हि पुंसामभ्युदयः परः॥[5]

**धर्म-पुरुषार्थः** - "ध्रियतेऽनेनेति धर्मः" आसंसारं विद्यामानम् अखिलमपि तत्त्वं धर्मेण एव धृतम् अस्ति, धर्मः पालनपोषणं करोति, धर्मश्च अवलम्बनं ददाति। अतः ग्रहाः परस्परं मार्गग्रहणं न कुर्वन्ति। अत एव गुरुत्वाकर्षणादयः सिद्धान्ताः योग्यतया कार्यं कुर्वन्ति। तथैव धर्मस्य अनुसरणेन मनुष्यः आविश्वं प्रभावयितुं शक्नोति। सद्यः धर्मः तु कश्चन पक्षः उत पूजापद्धति-सिद्धान्तः चिन्त्यते, परन्तु अत्र धर्मः इत्युक्ते मनुष्यतां प्रति कर्तव्यम्, आचरणं (Code of

---

[1] निर्वाणषटकम्, श्लो. १ https://greenmesg.org/stotras/brahman/nirvana_shatkam.php

[2] वसिष्ठसंहिता, अध्यायः – ३, श्लो. २३ – प्राणायामे सुखी भवेत्।

[3] कामसूत्रम्, अध्यायः – २, त्रिवर्गप्रतिपत्तिः, सूत्रम् - १४

[4] वसिष्ठसंहिता, अध्यायः – १, श्लो. ६६

[5] मया रचितः श्लोकः

conducts) च वर्तते। अर्थात् जीवने यस्य पालनं सर्वेषां नैतिक-जीवानां कृते हितावहं भवति, तदेव धर्मपूर्णम् आचरणम् उच्यते। योगशास्त्रम् अपि एतस्य आचरणस्य समर्थनं करोति। यथा - धर्माधर्मेषु विश्वासो यस्तदास्तिक्यमुच्यते॥[1] एषः धर्मः एव सत्याय, अहिंसायै, शान्त्यै, अस्त्येयाय, कर्तव्याय च प्रोत्सहते। उक्तञ्च –

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः॥[2]
श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥[3]

अत एव धर्मः द्विविधः उक्तः। साध्यधर्मः, सिद्धधर्मश्च। मनुष्यः साध्यधर्मस्य माध्यमेन सिद्धधर्मस्य प्राप्त्यै प्रयत्नं करोति। साध्यधर्मः इत्युक्ते सदाचरणस्य, शास्त्रोक्ततया व्यवहारस्य च माध्यमेन पुण्योदयः। एषः साध्यधर्मः अनेकेषु भागेषु विभक्तः अस्ति। तेषु प्रमुखाः भागाः – देशहितं, समाजहितं, कालानुसारव्यवहारः, वर्णव्यवस्था, आश्रमव्यवस्था, अष्टाङ्गयोगः च। साध्यधर्मस्य माध्यमेन मनुष्यः सिद्धधर्मस्य साक्षात्कारं करोति। तस्य सिद्धधर्मस्य कृते किमपि कर्तव्यं न भवति, परन्तु सिद्धधर्मस्य शरणागतिः स्वीकरणीया भवति।[4] सिद्धधर्मस्य विवरणं वेदान्तशास्त्रे विस्तरेण प्राप्यते। सिद्धधर्मस्य साक्षात्कारः मनुष्याय परमकल्याणकरः उक्तः महर्षिणा याज्ञवल्क्येन। यथा –

अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्॥[5]

अर्थात् योगसाधनाद्वारा आत्मदर्शनम् एव परमो धर्मः अस्ति। अतः योगशास्त्रं सर्वदा सिद्धधर्मस्य एव अनुपालनाय प्रोत्सहते, साध्यधर्मं तु विघ्नरूपं स्वीकरोति। यथा –

स्नानं पूजाविधिर्होमं तथा मोक्षमयी स्थितिः॥
व्रतोपवासनियम-मौनमिन्द्रियनिग्रहः॥६॥
ध्येयो ध्यानं तथा मन्त्रो दानं ख्यातिर्दिशासु च॥
वापीकूपतडागादि-प्रासादारामकल्पना॥७॥
यज्ञं चान्द्रायणं कृच्छ्रं तीर्थानि विविधानि च॥
दृश्यन्ते च इमे विघ्ना धर्मरूपेण संस्थिताः॥८॥[6]

---

[1] वसिष्ठसंहिता, अध्यायः – १, श्लो. ५६

[2] गरुडपुराणम्, आचारकाण्डः, अध्यायः – २३८ श्लो. ४

[3] पञ्चतन्त्रम्, तन्त्रं – ३, श्लो. १०४

[4] सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुच। गीता, १८/६६

[5] याज्ञवल्क्यस्मृतिः, अध्यायः – १, श्लो. ८

[6] शिवसंहिता, पटलः – ५, श्लो. ६-८

यदि ध्यानेन उक्तानां श्लोकानाम् अध्ययनं क्रियते, तर्हि ज्ञायते यत्, सामान्यैः जनैः यत्किमपि कर्तव्यं, धर्मरूपं च मन्यते, तत्सर्वमपि अत्र धर्माधारित-योगविघ्नत्वेन उल्लिखितम् अस्ति इति। परन्तु उक्तं सर्वमपि यदि द्विधाभाववर्जितं भवति, तर्हि सर्वमपि सिद्धधर्ममयं भवति।[1] शिवस्य कथनस्याशयः अन्यत्र अपि दरीदृश्यते। यथा –

स्नातं तेन समस्ततीर्थसलिलं दत्ता द्विजेभ्यो धरा,
यज्ञानां च हुतं सहस्रमयुतं देवाश्च सम्पूजिताः।
स्वाद्वन्नेन सुतर्पिताश्च पितरः सर्गं च नीताः पुनः,
यस्य ब्रह्मविचारणे क्षणमपि प्राप्नोति धैर्य्यं मनः॥[2]

वास्तव्येन अत्र योगस्य उच्चस्तरस्य वर्णनम् अस्ति, अतः तत्र केवलं शरणागतेः एव आवश्यकता भवति, न तु अन्येषां पुण्योदयक-कार्याणाम्। यतः सिद्धधर्मे साध्यधर्मः केवलं साधनरूपः भवति। योगिने अष्टाङ्गयोगः साध्य-धर्मः अस्ति –

ज्ञानं योगात्मकं विद्धि योगश्चात्मनि तिष्ठति।
स योगोऽष्टाङ्गसंयुक्तः सर्वधर्मः स उच्यते॥३१॥

अर्थात्, ज्ञानं योगस्वरूपकं विद्धि, योगः च आत्मनि तिष्ठति, स योगः अष्टाङ्गसंयुक्तः, स सर्वधर्मः उच्यते॥ साध्य-धर्मस्य अष्टाङ्गयोगस्य माध्यमेन एव सिद्धधर्मस्य (समाधेः / ॐ) शरणं प्राप्नोति। यथा –

ओङ्कारो वाचकस्तस्य वाच्यो रुद्रोऽमृताक्षरः।
इति वेदावसानज्ञः स्वयम्भूः प्राह धर्मदृक्॥

तस्य (अमृततत्त्वस्य) वाचकः ॐ कारः अमृतः अक्षरः रुद्रः वाच्यः इति वेद-अवसानज्ञः धर्मदृक् स्वयंभूः प्राह। साध्यधर्मेण बहुधा दुर्गुणेभ्यः रक्षा भवति, परन्तु साध्यधर्मे नियमाग्रहेण अन्तःकरणं पूर्णतया पवित्रं न भवति। अतः श्रीभगवान् गीतायाम् अपि एतस्य सिद्धधर्मस्य प्रशंसां कुर्वन् कथयति –

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति॥[3]

यदा सिद्धधर्मस्य शरणं योगी नयति, तदा धर्मः, अर्थः, कामः, मोक्षः च पुरुषार्थचतुष्टयमपि तस्मै अकारणं भवति। शरीरत्यागे सति प्रधानस्य निवृत्तौ सति च ऐकान्तिकं (निश्चयात्मिकं), आत्यन्तिकं (स्थायि) प्रकारकं कैवल्यं प्राप्यते। यथा –

सम्यग् ज्ञानाधिगमात् धर्मादीनामकारणप्राप्तौ।
तिष्ठति संस्कारवशाच्चक्रभ्रमिवद् धृतशरीरः॥

---

[1] चतुर्थो राजयोगः स्यात्स द्विधा भाववर्जितः॥ शिवसंहिता, पटलः – ५, श्लो. १५ उत्तरार्धः चतुर्थो राजयोगः स्यात्स द्विधा भाववर्जितः॥

[2] श्रीगोरक्षयोगशास्त्रम्, अध्यायः – मुक्तसोपानम्, उत्तरशतकम् – श्लो. १०१

[3] भगवद्गीता, ९/३१

प्राप्ते शरीरं भेदे चरितार्थत्वात् प्रधानविनिवृत्तौ।

ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति॥[1]

**अर्थ-पुरुषार्थः** -

अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवादिनी च।

वश्यश्च पुत्रोऽर्थकरी च विद्या षड् जीवलोकस्य सुखानि राजन्॥[2]

संसारस्य सर्वसुखानि अर्थाधारितानि एव सन्ति। सर्वेऽपि पुरुषार्थाः अपि अर्थाधिरिताः एव उक्ताः। "अर्थ्यते सर्वैः इति अर्थः" अर्थात् सर्वेऽपि यस्य उपार्जनं कर्तुम् अभिलषन्ति, सः अर्थः उच्यते। कामसूत्रम् अपि कथयति –

विद्या-भूमि-हिरण्य-पशु-धान्य-भाण्डोपस्कर-मित्रादीनामर्जनमर्जितस्य विवर्धनमर्थः॥[3]

अर्थ-विषये यत्किमपि चिन्तनं भवति, तत्र आचार्यस्य चाणक्यस्य सर्वदा उल्लेखः भवत्येव। आचार्यः कथयति - "सुखस्य मूलं धर्मः। धर्मस्य मूलम् अर्थः"[4] इति। सामाजिक-व्यवहारस्य कृते चाणक्याय अर्थः एव प्रधानः अस्ति। यथा -

त्यजन्ति मित्राणि धनैर्विहीनं पुत्राश्च दाराश्च सुहृज्जनाश्च।

तमर्थवन्तं पुनराश्रयन्ति अर्थो हि लोके मनुषस्य बन्धुः ॥[5]

अर्थः (लक्ष्मीः) एव मनुष्यस्य रक्षकः अस्ति।[6] धर्मः, कामश्च अर्थे एव आधारितौ भवतः। यथा – अर्थमूलौ धर्मकामौ।[7] अतः अर्थः सर्वप्रकारेण अर्जनीयः इति तु निश्चितः। परन्तु अर्थः अन्यान् दासान् कर्तुं तु सहायकः, परन्तु सः स्वयं कस्याऽपि दासः नास्ति। यथा –

अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्।

इति सत्यं महाराज! बद्धोऽस्म्यर्थेन कौरवैः॥[8]

अतः अर्थस्य योग्यतया उपयोगः धर्माय भवेदिति साधयितुं पुरुषार्थे एषः प्रमुख्यतया राराजते। कामाय अर्थस्य उपयोगः न हि पूर्णतया अयोग्यः न भवति। परन्तु धर्माय व्ययीकृतः अर्थः मोक्षमार्गं प्रति मार्गप्रशस्तं करोति, अन्यथा पतनं करोति। यथा – अर्थानामीश्वरो यः स्याद् इन्द्रियाणामनीश्वरः।

इन्द्रियाणामनैश्वर्याद् ऐश्वर्याद्भ्रश्यते हि सः॥[1]

---

[1] साङ्ख्यकारिका, कारिका – ६७, ६८

[2] विदुरनीतिः, श्लो. ७०

[3] कामसूत्रम्, अध्यायः – २ (त्रिवर्गप्रतिपत्तिः), सूत्रम् - ९

[4] चाणक्यसूत्रम्, सूत्रम् – २, ३

[5] चाणक्यनीतिदर्पणः, अध्यायः – ५, श्लो. ५

[6] सा श्रीर्वोऽव्यात्। चाणक्यसूत्रम्, अध्यायः - १ सूत्रम् - १

[7] चाणक्यसूत्रम्, सूत्रम् - ९०

[8] महाभारतम्, भीष्मपर्व, अध्यायः – ४३, श्लो. ४३

अतः श्रीकृष्णेन उक्तम् -

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी॥
यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी॥[2]

काम-पुरुषार्थः - श्रीभगवान् आत्मानं कामरूपं परिगणयति, परन्तु सः कामः धर्मविरुद्धः न स्यादित्यपि कथयति। यथा -

बलं बलवतां चाहं कामरागविवर्जितम्।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ॥[3]

काम्यते अनेन इति कामः - काम्यते असौ कर्म्मणि घञ्। विषयस्य, इन्द्रियाणां च सम्पर्कात् उत्पन्नः मानसिकः आनन्दविशेषः एव मुख्यतया कामः उच्यते। महाभारतेऽपि काम-व्याख्या प्राप्यते। यथा –

इन्द्रियाणां च पञ्चानां मनसो हृदयस्य च।
विषये वर्तमानानां या प्रतिरुपजायते।
स काम इति मे बुद्धिः कर्मणां फलमुत्तमम्॥[4]

योगशास्त्रानुसारं कामः (शुक्रः) मनुष्यजीवनस्य मुख्यतत्त्वम् अस्ति। अतः मनुष्येन शुक्रस्य रक्षा निश्चयेन करणीया। यथा –

चित्तायत्तं नृणां शुक्रं शुक्रायत्तं च जीवितम्।
तस्माच्छुक्रं रक्षणीयं योगिभिश्च प्रयत्नतः॥[5]

कामः पुरुषरूपेण अपि कल्पितः अस्ति। यथा –

कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्।
सतो बन्धुमसति निरविन्दन्हृदि प्रतीष्या कवयो मनीषा ॥[6]

---

[1] विदुरनीतिः श्लो. ६३ https://archive.org/details/in.ernet.dli.2015.406647/page/n65/mode/2up?view=theater)

[2] भगवद्गीता, १८- ३३,३४

[3] तत्रैव, ७.११

[4] महाभारतम्, वनपर्व, अध्यायः – ३३, श्लो. ३७

[5] हठप्रदीपिका, उपदेशः – ३, श्लो. ८९

[6] ऋग्वेदः, मण्डलः – १०, अध्यायः – १२९, ऋचा - ४

अर्थात्, सृष्टेः आरम्भे भोगेभ्यः कामभावः वर्त्तमानो भवति, यः मानवस्य बीजशक्तिरूपे प्रकटः भवति, क्रान्तदर्शी (कवयः) विद्वान् आत्मनि शरीरस्य बन्धकः अस्ति इति ज्ञात्वा वैराग्यं प्राप्नोति। योगशास्त्रेऽपि ब्रह्मचर्यस्य अनेकवारम् अनिवार्यता उक्ता अस्ति, कामस्य अनावलम्बस्य अपि उपदेशः कृतः अस्ति। यथा -

ब्रह्मचारी मिताहारी त्यागी योगपरायणः।
अब्दादूर्ध्वं भवेत् सिद्धो नात्र कार्या विचारणा ॥
वह्नि स्त्रीपथिसेवानामादौवर्जनमाचरेत्॥[1]
ब्रह्मचर्यरतस्यैव नित्यं हितमिताशनः।
मण्डलाद् दृश्यते सिद्धिः कुण्डल्यभ्यासयोगिनः॥[2]

अर्थात्, ब्रह्मचारी (कामत्यागी), मिताहारी, त्यागी, योगपरायणः (योगे रतः) अब्दात् उर्ध्वं सिद्धः भवेत्। अत्र न विचारणा कार्या। ब्रह्मचर्ये रतस्य एव हित-मित-अशनः कुण्डलिन्याः अभ्यास-योगिनः मण्डलात् सिद्धिः दृश्यते। योगसूत्रम् अपि ब्रह्मचर्यस्य आवश्यकतां वर्णयति – ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः।[3]

अर्थात्, योगी यस्य सामर्थ्यस्य लाभं प्राप्य स्वस्य अप्रतिहतान् (प्रतिघातवर्जितान्) गुणान् वर्धयति, तेन स्वयं सिद्धो भूत्वा शिष्येषु अपि ज्ञानस्य आधानं कर्तुं समर्थः भवति। अतः योगशास्त्रे कामात् विरक्तेः कृते अनेकवारं सूचना दत्ता अस्ति। कामात् विमुक्तेः उपायाः अपि दत्ताः सन्ति। भगवद्गीता कथयति –

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते।
सङ्गात् सञ्जायते कामः, कामात् क्रोधोऽभिजायते॥[4]

अतः सम्पूर्णं योगशास्त्रं कथञ्चिदपि कामाद्दूरे स्थातुं परामर्शं ददाति, येन मानवजीवनस्य परमलक्ष्यस्य मोक्षस्य प्राप्तिः सम्भवेत्।

**मोक्षः-पुरुषार्थः** - मुच्यते सर्वैर्दुःखबन्धनैर्यत्र सः मोक्षः। पतञ्जलिः अपि यागसूत्रे कथयति –

परिणाम-ताप-संस्कार-दुःखैः-गुण-वृत्ति-विरोधाच्च दुःखमेव सर्वं विवेकिनः॥

अर्थात्, परिणाम-दुःखं, ताप-दुःखं, संस्कार-दुःखम् इत्येषां त्रिप्रकारकानां दुःखानां कारणेन, त्रयाणाञ्च गुणानां वृत्तिषु परस्परं विरोधस्वभावास्य कारणेन विवेकिनः कृते सर्वाण्यपि कर्मफलानि दुःखरूपाणि सन्ति।

वास्तव्येन मनुष्यः चिन्तयति यत्, अहं सर्वमपि अर्जनं मे सुखाय कुर्वन्नस्मि इति। अतः सः विषयाणां, भोगानां वा ध्यानं करोति, ततः स्वचिन्तने क्रियान्वयं कृत्वा सः अतीव कष्टेन सांसारिकवस्तूनि एकत्रयति। परन्तु परिणाम-ताप-

---

[1] हठप्रदीपिका, उपदेशः – १, श्लो. ५७, ६१

[2] Ibid. ३, श्लो. ११७

[3] योगसूत्रम्, साधनपादः, सूत्रं - ३८

[4] भगवद्गीता, अध्यायः – २, श्लो. ६२

संस्कार-गुणानुसारं तस्य वस्तोः रक्षणम् अतीव कष्टमयं भवति, अन्ते सः वस्तूनि आधिपत्येऽनाधिपत्ये वा दुःखितः भवति। यथा –

यं यमर्थमुपादत्ते दुःखेन सुखहेतवे।
तं तं धुनोति भगवान् पुमान् शोचति यत्कृते॥[1]
धिगस्तु खलु मानुष्यं मानुषेषु परिग्रहे।
यतो मूलानि दुःखानि सम्भवन्ति मुहुर्मुहुः॥[2]

विवाहादिकं कृत्वा मनुष्यः जन्म व्यर्थं करोति। यतः सुखाभिलाषी सः सर्वदा दुःखे निमज्जितः परमार्थाय मोक्षाय यत्नं न करोति। तस्य कृते यत्प्रीतिकरं भवति, वास्तव्येन तदेव तस्य दुःखवृक्षस्य बीजं भवति। तेन वस्तुना एव सुखापेक्षया दुःखानि अधिकानि भवन्ति। उक्तञ्च विष्णुपुराणे –

यद्यत्प्रीतिकरं पुंसां वस्तु मैत्रेय जायते।
तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति।
कलत्र-पुत्र-मित्र-अर्थ-गृह-क्षेत्र-धनादिकैः।
क्रियते न तथा भूरि सुखं पुंसां यथाऽसुखम्॥[3]

न केवलं पातञ्जलयोगः, अपि तु जैनानां, बौद्धानाम्, अन्यदर्शनानां च मोक्षसम्बद्धः विचारः समानः अस्ति। जैनाः आस्रावनिरोधं कथयन्ति, बौद्धाः निर्वाणं, न्यायवैशेषिकाः च इच्छाशून्यतां वर्णयन्ति। सर्वेऽपि संसारदुःखात् निर्गन्तुं पौनःपुन्येन कथयन्ति। नित्यस्य चिन्तने एव स्थातव्यम् इति मार्गः सर्वैः उक्तः। यथा छान्दोग्योपनिषदि –

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा,
त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति॥[4]

अर्थात्, नित्यम् एव आनन्दपूर्णोस्ति। अनित्ये कथञ्चिदपि आनन्दः नास्ति। अतः मनुष्येण नित्यं ज्ञातुमेव ध्यानं करणीयम्, अतः भो आदरणीय! नित्यं ज्ञातुं कामनां करोतु। श्रीआदिशङ्कराचार्यः अपि चर्पटपञ्जरिकायाम् अनेकवारम् अनित्यं त्यक्तुं नित्योपासनां कर्तुं कथयति। यथा –

मूढ जहीहि धनागमतृष्णां, कुरु सद्बुद्धिं मनसि वितृष्णाम्।
यल्लभसे निजकर्मोपात्तं वित्तं तेन विनोदय चित्तम्॥[5]

---

[1] श्रीमद्भागवतमहापुराणम् – ३/३०/२

[2] महाभारतम्, स्त्रीपर्व, ८-६

[3] विष्णुपुराणम्, ६/५/५५-५६

[4] छान्दोग्योपनिषद्, अध्यायः – सप्तमः, खण्डः – त्रयोविंशः, श्लो. १

[5] चर्पटपञ्जरिका, श्लो. २

अर्थात्, हे मूढ! सर्वासां धनागम-तृष्णानां त्यागं कुरु। स्वमनः नित्यचिन्तनाय योजय। यत्किमपि वित्तं निजकर्मणा प्राप्तमस्ति, तेन मनः सन्तोषय। विविकेचूडामणौ सः कथञ्चिदपि तत्त्वमसि इति भावं कर्तुं कथयति। यथा –

जातिनीतिकूलगोत्रदूरगं, नामरूपगुणदोषवर्जितम्।

देशकालविषयातिवर्ति यद् ब्रह्म तत्त्वमसि भावयात्मनि॥[1]

**परिणामाः -** उक्तात् लेखात् निम्नाः परिणामाः स्पष्टतः प्राप्यन्ते।

- योगशास्त्रस्य वास्तविकं लक्ष्यं सिद्धधर्मस्य निरूपणम् अस्ति। परन्तु सिद्धधर्मस्य कृते साध्यधर्मः सहायको भवति, अतः अष्टाङ्गयोगत्वेन साध्यधर्मोऽपि निरूपितः अस्ति।
- योगशास्त्रं पुरुषार्थचतुष्टयं केवलं साध्यधर्मत्वेन पश्यति। पुरुषार्थचतुष्टयस्य चरमे तु तस्याऽपि त्यागं कर्तुं सूचयति। अनेन कैवल्यप्राप्त्यै तु पुरुषार्थचतुष्टयस्य त्यागः आवश्यकः इति स्पष्टं भवति।
- विविधानि पुराणानि, सर्वाः उपनिषदः, विविधाः रचनाः च विभिन्नतया एकं साध्यधर्मं पालयितुम् एव कथयति। कथञ्चिदपि संसारे वासनायाः उत सङ्ग्रहस्य कृते स्थानं नास्ति, अतः धर्मस्य, अर्थस्य, कामस्य च केवलं कर्मानुसारम् उपभोगस्य विचारः दीयते।
- योगशास्त्रं सर्वधा इच्छायाः त्यागं कृत्वा समतायाः पालनं कर्तुम् एव कथयति। तत्र धर्मः केवलं सहायकरूपेण विद्यते, परन्तु कामात्तु पूर्णतया निवृत्तिः अपेक्षते। पुरुषार्थचतुष्टयस्य एतादृशं साधनीकरणं योगशास्त्रे कृतमस्ति, तस्य पृष्ठे कैवल्ये अद्वैतायाः सिद्धिरेव विद्यते। पूर्णतः समर्पणम् एव कैवलम् उत्पादयति, तस्य कृते सर्वाणि साधनानि अपि त्यक्तव्यानि भवन्ति।

उपसंहार - पुरुषार्थः पूर्णतया अनावश्यकः इति तु कथञ्चिदपि वक्तुं न शक्यते। यतः ईश्वरमार्गस्यानुसरणाय पुरुषार्थचतुष्टयम् एव उपयोगि भवति। परन्तु योगमार्गे अन्ते साधनस्य अपि त्यागः आवश्यकः भवति, अतः शरीर-मनयोः शुद्धतायै यस्य साधचतुष्टयस्य उपयोगः कृतः, तयोः परे गन्तुं निश्चयेन तेषां त्यागः करणीयः भवति इति योगशास्त्रस्य विविधेषु ग्रन्थेषु लिखितम् अस्ति। योगमार्गः सर्वदा सिद्धधर्मस्य अनुसरणं कर्तुम् एव कथयति, परन्तु योगमार्गे ये आरम्भिकस्तरे सन्ति, तेभ्यः योगशास्त्रे विस्तरेण मार्गदर्शनं प्राप्यते। आरम्भिकयोगिनां सम्मुखं साधनचुष्टयस्य कथम् उपयोगः करणीयः उत कथं साध्यधर्मस्य माध्यमेन सिद्धधर्मस्य प्राप्तिः करणीया इति योगशास्त्रं कथयति। न केवलं पातञ्जलयोगसूत्रम् अपि तु शिवसंहितासदृशाः ग्रन्थाः अपि साध्यधर्मस्य अपेक्षया सिद्धधर्माय अधिकं महत्त्वं यच्छति। अतः पूर्णसमर्पणेन योगमार्गानुसरणं कर्तव्यं भवति, तेन सिद्धधर्मस्य पालनं शक्यते। इति शम्।

[1] विविकचूडामणिः, श्लो. २५५

## Bibliography


1. आचार्य प्रशान्त (२०२२) तत्त्वबोध, acharyaprashant.org.
2. ईशावास्योपनिषत्, (२०१२) डॉ. उमेशान्द शास्त्री, स्वामी निश्चलानन्द गिरि, प्रकाशकः – श्री कैलास विद्या, ऋषिकेश.
3. गोयन्दका (१९८८), श्रीमद्भगवद्गीता शांकरभाष्य हिन्दी-अनुवाद-सहित, गीताप्रेस.
4. गोविन्द सिंह (१९९०) चाणक्यसूत्रम्, प्रकाशकः – साधन पोकेट बुक्स
5. छान्दोग्योपनिषद्, (२०११) गीताप्रेस गोरखपुर.
6. विदुरनीतिः, डॉ. गुञ्जेश्वर चौधरी चौखम्बा सुरभारती प्रकाशन.
7. ऋग्वेदः, (२०२०) डॉ. देवीसहायपाण्डेय, चौखम्बा संस्कृत प्रतिष्ठान
8. साङ्ख्यकारिका, डॉ. सन्तनारायण श्रीवास्तव्य, चौखम्बा सुरभारती प्रकाशन.
9. पञ्चतन्त्र, (२०२१) मधुकर उपाध्याय, सेतु प्रकाशन प्रा. लि. – नोयडा.
10. चाणक्यनीतिदर्पणः, (१९५६) पण्डितमेहरचन्दशर्मा, श्रीवेङ्कटेश्वर-मुद्रणालयः
11. भजगोविन्दम् (चर्पटपञ्जरिका), (२०१५) श्रीमती के शान्ता, तिरुमल तिरुपति देवस्थानम् – तिरुपति.
12. भट्टाचार्य और सिंह (१९९७) भोजदेवकृत-राजमार्तण्डवृत्तिसमेतं पातञ्जलयोगसूत्रम्, भारतीय विद्या प्रकाशन।
13. महर्षिवेदव्यासकृतं गरुडपुराणम्, (२०२२) हीरा वल्लभ जोशी, डी.पी.बी. पब्लिकेशन्स.
14. विवेकचूडामणिः, (२०१३) मुनिलाल, गीताप्रेस गोरखपुर.
15. वसिष्ठसंहिता (योगकाण्डः), (१९६९) दार्शनिक साहित्यानुसंधान विभाग – कैवल्यधाम.
16. श्रीगोरक्षयोगशास्त्रम्, (२०१९) डॉ. श्यामलेशकुमार तिवारी, चौखम्बा सुरभारती प्रकाशन.
17. श्रीवास्तव (द्वि. सं. १९८८) व्यासभाष्यसंवलितं पातञ्जलयोगदर्शनम्, चौखम्बा सुरभारती प्रकाशन, वाराणसी।
18. सौरभिकता एकार्थनाममाला https://sa.wikisource.org/wiki/एकार्थनाममाला
19. स्वात्मारामस्य हठयोगप्रदीपिका, प्रकाशकः – कैवल्यधाम, संस्करणकर्ता – स्वामी दिगम्बरजी, डॉ. पीतम्बर झा, १९९८ (मूलरचना - https://sa.wikisource.org/s/6v1)
20. हंसः सोऽहम् और दुनाखे (२०१४) छान्दोग्योपनिषद्, यशवंत प्रकाशन
21. हठप्रदीपिका ज्योत्स्ना, (२००४) स्वामी महेशानन्दादयः, कैवल्यधाम.
22. Dhiman, S., & Amar, A. D. (2018). Managing by the Bhagavad Gita: Timeless lessons for today's managers. Springer.
23. M. M. Pathak (1999), विष्णुपुराणम्, Pub. – Oriental Institute, Vadodara
24. Shastri, J. L. (1999, January 1). Bhagavata Purana of Krsna Dvaipayana Vyasa. Motilal Banarsidass. श्रीधरस्वामिनः भावार्थबोधिनीनाम्ना संस्कृतटीका
25. Shivasamhita, (1914), Srisa Chandra Vasu, The Panini office – Bhuvaneswari Ashrama – Bahadurganj


## Author's Detail


Address: Assistant Professor
Lakulish Yoga University,
Ahmedabad – 380060, Gujrat, India.


****************************

# संस्कृतजगति विलियम-जोन्समहोदयस्य अवदानम्

## Contribution of Sir William Jones to the Sanskrit World

Debajyoti Manna

**Abstract**

Sir William Jones was a British Philologist, Orientalist and a great scholar of Sanskrit language in India. He is famous for his proposition of the existence of a relationship among European and Indo Aryan language. He studied the Beads and later he became Sanskritist. He played a prominent contribution in the field of Sanskrit language and literature. According to him him The Sanscrit language, whatever be its antiquity, is of a wonderful structure; more perfect than the Greek, more copious than the Latin, and more exquisitely refined than either, yet bearing to both of them a stronger affinity, both in the roots of verbs and the forms of grammar, than could possibly have been produced by accident; so strong indeed, that no philologer could examine them all three, without believing them to have sprung from some common source, which, perhaps, no longer exists; there is a similar reason, though not quite so forcible, for supposing that both the Gothic and the Celtic, though blended with a very different idiom, had the same origin with the Sanscrit; and the old Persian might be added to the same family. However, he is remarkable in this Galaxy for his magnificent work which is not only rare but also uncommon.

बहुभाषाभिज्ञः पण्डितः प्रकृष्टलेखकः उत्तमकविः विलियमजोन्स्-महोदयः अवश्यमेव स्मर्त्तव्यो जनः। किन्तु कलिकातास्थस्य एशियाटिक् सोसाइटि इत्यस्य प्रतिष्ठातृत्वेन यत् अक्षय्यं यशः तेन लब्धं तत् तस्य अन्यानि सर्वाणि यशांसि अतिक्राम्य वर्तते। जोन्स्-महोदयेन प्रतिष्ठापिताया अस्याः संस्थायाः आयुः सम्प्रति अशीत्युत्तरैकशतवर्षाणि। जोन्स्-महोदयस्य जीवनवृत्तान्तालोचनप्रसङ्गे अस्याः संस्थायाः प्रायेण द्विशतवर्षव्यापिनः इतिहासस्य आलोचनम् अप्रासङ्गिकं नास्ति।

**कूटशब्दाः** - विलियम-जोन्स, एशियाटिक् सोसाइटिः, संस्कृतसाधना

*****************************

भारतम् आगत्य तथा प्राच्यविद्यायाः अवसरं सम्प्राप्य जोन्सः सातिशयम् आत्मप्रसादं लब्धवान्। अवसरसमये कलिकातातः बहिः नानास्थानेषु गत्वा स अस्मिन् विषये ज्ञानम् अर्जितुं स्पृहयति स्म। भारतम् आगत्य स यं विशेषं सन्तोषं लब्धवान् तत् तस्य भूतपूर्वछात्रस्य लर्ड-आलथ्रोपस्य समीपे लिखितात् एकस्मात् पत्रात् ज्ञातुं शक्यते। (Asiatic Jones, Arberry, P.22)। १७८३-खीष्टाब्दे लर्ड-आलथ्रोपं प्रति लिखिते अन्यस्मिन् एकत्र पत्रे स ज्ञापितवान् यत्, कस्यचिदपि युरोपीयस्य अपेक्षया एतद्देशसम्बन्धे अधिकज्ञानस्य अर्जनम् एव तस्य लक्ष्यम् अस्ति।

**जोन्स्-महोदयः कलिकातास्थम् एशियाटिक् सोसाइटि च** - एशियाटिक्-सोसाइटि इति संस्था तस्य प्रतिष्ठाकालादेव भाषा-साहित्य-भाषातत्त्व-इतिहास-प्रत्नतत्त्व-लिपितत्त्व (Epigraphy and Paleography) - मुद्रातत्त्व-शिल्पकला-धर्म-दर्शन-लोकसाहित्येषु गवेषणामारब्धवती। अस्याः संस्थायाः प्रेरणया एव युरोपे संस्कृतचर्चायाः प्रसारो जातः। विगतेषु सार्धैकशतवर्षेषु युरोपे यद्यपि भाषाविज्ञानशास्त्रस्य प्रसारोऽभवत् तथापि अस्य उत्सस्थानं तु कलिकातास्थम् एशियाटिक्-सोसाइटि एव। अस्यां संस्थायां कर्मरतः जेम्स्-प्रिन्सेप्-महोदयः ब्राह्मीलिप्याः पाठोद्धारमकरोत्। संस्थायाः अन्यैः गवेषकैः लिपिमालायाः पाठोद्धारेण प्राचीनमुद्राणां कालनिर्णयेन च

भारतीयेतिहासस्य उद्धारे सहायता विहिता। भारतवर्षस्य प्रत्नतत्त्व-सम्बन्धिन्यां गवेषणायाम् अग्रगण्यम् एशियाटिक् सोसाइटि इति संस्थानं दृष्टान्तीकृत्य भारतसर्वेकारो द्विषष्ठ्युत्तराष्टादशशततमे वर्षे भारतीयपुरातत्त्वविभागस्य (Archaeological Survey of India) प्रतिष्ठां कर्तुमुद्युक्तो जातः। भारतवर्षस्य मुद्रातत्त्वसमितिः मुद्रातत्त्व-सम्मेलनं च (Numismatic Society of India and All India Numismatic Conference) एशियाटिक् सोसाइटि इति संस्थायाः सदस्यैरेव प्रतिष्ठापिते। एशियाटिक् सोसाइटि इत्यस्य प्रेरणया उत्कृष्टसाहाय्येन च भारतसर्वेकारस्य भाषासमीक्षाविभागस्य (Linguistic Survey of India) सृष्टिः परिपोषणं च अभवताम्। प्राचीनमातृकाणां संग्रहे संरक्षणे च एशियाटिक् सोसाइटि इत्यस्य महती भूमिका वर्तते। अस्मिन् विषये संस्थायाः कर्मपद्धतिः देशे विदेशे च आदर्शभूता। शतवर्षेभ्यः प्राक् इयं संस्था बिबलिओथिका इण्डिका (Bibliotheca Indica) इति ग्रन्थमालायाम् अप्रकाशितानां ग्रन्थानां प्रकाशनमारब्धवती। अद्यावधि बहूनां ग्रन्थानां सुष्ठु सम्पादनं कृत्वा प्रकाशः कृतः। प्रतिष्ठातुः जोन्स्-महोदयात्परं संस्थायां कर्मरतेषु मुख्याः विल्किन्स् कोलब्रुक् विल्सन् प्रिन्सेप् कानिंहाम् ब्लक्म्यान् (Blochman 1838-1878) विभारिज् हजसन् क्षोमा द्य करोसी राजा राजेन्द्रलालमित्रः (१८२२-१८९१) महामहोपाध्यायः हरप्रसादशास्त्री (१८५३-१९३१) इत्यादयः भारतीयविद्यायां बहुत्र दिक्पालत्वेन परिगणिताः सन्ति। संस्थायाः प्रतिष्ठाकाले जोन्स्-महोदयः संस्थायाः लक्ष्यं वर्णयन्नाह, एशियाभूखण्डस्थः मनुष्येण प्रकृत्या च सृष्टः सर्वोऽपि विषयः अस्याः संस्थायाः आलोच्यः। प्रतिष्ठातुः परिकल्पनानुसारेण संस्था प्रथमं विज्ञानालोचनायां प्रावर्तत। अनया प्रकाशितं Transactions तथा Journal भारतवर्षे प्रथमं विज्ञानालोचनायाः प्रवर्तनमकुरुताम्। एताभ्यामेव भारतवर्षे गणितम्, आवहतत्त्वम्, समुद्रतरङ्गपर्यवेक्षणम् (Tidal Observation), झटिकागतितत्त्वम् (Law of Storms), विद्युत्तत्त्वम्, भूविज्ञानम्, पशुतत्त्वम् (Zoology), उद्भिद्विज्ञानम्, भूगोलशास्त्रम्, जातितत्त्वम् (Ethnology), रसायनशास्त्रम् इत्यादीनां चर्चा आरब्धा विकसिता च। भारते भूतत्त्वविद्यायाः प्रवर्तकस्य Voysey इत्यस्य तथा भूतत्त्वसमीक्षायाः प्रवर्तकानां Thomas Oldham (1816-1873), William Lambton (1766-1823), Thomas John Newbold (1807-1850) इत्यादीनां भूतत्त्वविदां प्रथमं कर्मस्थलं तावत् एशियाटिक् सोसाइटि। आलिपुरस्थायाः पशुशालायाः प्रथमाध्यक्षः स्रोयेनल्डारः (Schwendler), भारतीयायाः उद्भिद्विद्यायाः प्रवर्तकः रक्सवार्गः (Roxburgh), 1751-1815), नृतत्त्वज्ञः डाल्टनः (E. T. Dalton, 1815-1880) इत्यादयः संस्थायां कर्मणि रताः आसन् तथा एतेषां गवेषणानि सर्वप्रथमं संस्थायाः पत्रिकास्वेव प्रकाशितानि जातानि। भारतवर्षे विज्ञानस्य सर्वासां शाखानाम् आलोचना एशियाटिक् सोसाइटि इत्यनेनैव प्रारब्धा इत्युच्यते चेत् अत्युक्तिर्न भवति। आधुनिककाले आचार्यस्य जगदीशचन्द्रवसोः आचार्यस्य प्रफुल्लचन्द्ररायस्य च विज्ञानविषयकगवेषणाप्रबन्धद्वयम् अस्यामेव संस्थायां पठितं तथा अस्याः संस्थायाः पत्रिकायामेव प्रकाशितम्। भारतसर्वेकारस्य विज्ञानसम्बद्धविभागेषु प्रायेण सर्वे एव विभागाः अस्याः संस्थायाः प्रेरणया सृष्टाः वर्धिताश्च सन्ति। अत्र भारतीयत्रिकोणमितिसमीक्षा (१८१८), भारतीयभूतत्त्वसमीक्षा (१८५१), भारतीयावह-विभागः (१८७५), भारतीयपशुविज्ञानसमीक्षा (१९११), भारतीयोद्भिद्विद्यासमीक्षा (१९१२) तथा साम्प्रतं सृष्टः नृतत्त्वविभागः इत्येते दृष्टान्तत्वेन ग्रहीतुं शक्यन्ते। शिवपुरस्थं वोटानिकाल्

गार्डेनस्, आलिपुरस्था पशुशाला तथा भारतीयः सङ्ग्रहालय (Indian Museum) इत्येतेषां निर्माणे अस्याः संस्थायाः भूमिका अनस्वीकार्या। आधुनिककाले त्रयोदशोत्तरोनविंशतिशततमे वर्षे एशियाटिक् सोसाइटि इत्यस्य प्रचेष्टया एव इण्डियान् साइन्स् कांग्रेस् इत्यस्य प्रतिष्ठा जाता। भारतीयवैज्ञानिकानाम् इयं मुख्यसंस्था अनेकासां शाखानां प्रतिष्ठात्री वर्तते। साम्प्रतिककालं यावत् एशियाटिक् सोसाइटि इत्यत्र एका चिकित्साविज्ञानस्य शाखा अपि कार्यनिरता आसीत्। कलिकाता मेडिकेल् कालेज् इत्यस्य प्रतिष्ठायाम् अस्याः संस्थायाः कापि भूमिका आसीत् न वा इति निश्चयेन वक्तुं न शक्यते। किन्तु संस्थायाः पुरातन-पत्रादिषु दृश्यते यत् संस्थायाः केचन सदस्याः विगतस्य शतकस्य पञ्चमे षष्ठे च दशके मेडिकेल् कालेज् इत्यस्य विशिष्टं दायित्वं स्वीकृतवन्तः। कलिकातायाम् एकस्य ट्रपिकाल् स्कुल् आफ् मेडिसिन् इत्यस्य प्रतिष्ठाप्रसङ्गः एशियाटिक् सोसाइटि इत्यस्य एकेन प्राक्तनेन सभापतिना डक्टर् आनाडेल् (Dr. N. Annadale) इत्यनेन सर्वादौ उत्थापितः। ट्रपिकाल् स्कुल् अफ् मेडिसिन् इत्यस्य प्रतिष्ठायाः परं संस्थायाः चिकित्साविद्यासम्बद्धं सर्वं पत्रिकादिकम् अस्य ग्रन्थागाराय प्रदत्तम्। सप्तपञ्चाशदुत्तराष्टादशशततमे ईस्वीयाब्दे जनवरीमासे कलिकाताविश्वविद्यालयस्य प्रतिष्ठा यान् ऊनत्रिंशत् जनान् आदाय जाता तेषु विंशतिर्जनाः सोसाइटि इत्यस्य अत्युत्साहवन्तः सदस्याः। विश्वविद्यालयस्य प्रथमं कुलपतिपदम् अलञ्चकार संस्थायाः तत्कालीनः सभापतिः स्यार् जेम्स् विलियम् कोल्विल् (Sir James William Colville, 1810-1880)। वर्तमानकालेऽपि संस्थायाः पत्रिकायां (Journal) विशिष्टवैज्ञानिकानां गवेषणादिकं प्रकाश्यते। साम्प्रतमपि वैज्ञानिकगवेषणायै संस्थायाः पक्षतः एकादश पदकानि पुरस्कारत्वेन प्रदीयन्ते। इतिहासविषये गवेषणायै द्वयोः पदकयोः व्यवस्था कृता। संस्थया ये पुरस्कृताः सन्ति ते समग्रे विश्वे ख्यातिं लब्धवन्तः। संस्थायां गवेषणाकार्यार्थं अधस्तनानां चतसृणां गवेषणावृत्तीनां व्यवस्था वर्तते सर् विलियम् जोन्स् फेलोशिप् (संस्कृतगवेषणा), राजा राजेन्द्रलाल मित्र फेलोशिप (बौद्धशास्त्रगवेषणा), जेम्स् प्रिन्सेप् स्कालरशिप् (लिपिमुद्रातत्त्वयोः गवेषणा), आर. जि. केसि फेलोशिप् (इस्लामीयगवेषणा)। षण्णवत्युत्तरसप्तदशशततमे ईस्वीयाब्दे इयं संस्था एकस्य संग्रहालयस्य प्रतिष्ठार्थं सङ्कल्पं स्वीकृतवती। चतुर्दशोत्तराष्टादशशततमेस्वीयाब्दात् प्राक् अयं सङ्कल्पः वास्तवतां न प्राप्तः। संस्थायाः संग्रहालये अधस्तनानि वस्तूनि संगृहीतानि भविष्यन्ति इति स्थिरीकृतम् – प्रस्तरः, ताम्रम् अथवा प्राचीनेषु स्मृतिस्तम्भेषु उत्कीर्णा लिपिः (हिन्दुशासनकालीना यवनशासनकालीना वा), हिन्दुधर्मस्य देवदेवीनां मूर्तयः, प्राचीनमुद्राः, प्राचीनमातृकाः, प्राच्यानि युद्धास्त्राणि, वाद्ययन्त्राणि, धर्मकार्येषु व्यवहृतं तैजसादिकम्, हस्तकलासु व्यवहृतं द्रव्यादिकम् (implements of native art and manufacture), भारतवर्षे एव प्राप्यमाणं प्राणिनां शुष्कं संरक्षितं वा मृतशरीरम् (stuffed), प्राणिनां सम्पूर्णः कङ्कालः अस्थिपञ्जरो वा, विहगानां संरक्षितानि शुष्काणि वा मृतशरीराणि, शुष्कं फललतागुल्मादिकम्, खनिजद्रव्याणि, परिष्कृतः अपरिष्कृतश्च अयःपिण्डः, उद्भिद्भ्यः प्राप्तानि द्रव्याणि (तण्डुलविकाराः गुडम् इत्यादिकम्), धातुजद्रव्याणि इत्यादीनि। ऊनपञ्चाशदुत्तराष्टादशशततमे ईस्वीयाब्दे एव संस्थायाः संग्रहालयः एतावान् समृद्धः सञ्जातः यत् अस्मिन्नेव वर्षे संगृहीतानां द्रव्यादीनाम् एकः तालिकाग्रन्थः प्रकाशितः। सप्तत्रिंशदुत्तराष्टादशशततमेस्वीयाब्दादेव एशियाटिक् सोसाइटि इति संस्था सामान्यजनानां कृते एकं संग्रहालयं स्थापयितुं सर्वकारमनुरुरोध। सप्तपञ्चाशदुत्तराष्टादश-

शततमेस्वीयाब्दे संस्था सर्वकारं ज्ञापितवती यत् यदि सर्वकारः संग्रहालयं प्रतिष्ठापयति तर्हि संस्था स्वकीयं संग्रहं सर्वकारीयसंग्रहालयाय प्रदास्यति। संस्थायाः अविरतानुरोधान् प्राप्य भारतसर्वकारः षड्षष्ठ्युत्तराष्टादशशततमे ईस्वीयाब्दे एकं न्यायमुपयुज्य कलिकातायाम् इण्डियान् म्यूजियम् इत्यस्य प्रतिष्ठामकरोत्। इत्थं संस्थायाः पुरातत्त्वनृतत्त्वभूतत्त्व-पशुविद्यासम्बद्धान् सर्वान् संग्रहान् आदाय भारतीयसंग्रहालयस्य प्रतिष्ठा सम्पन्ना। परवर्तिनि काले संस्थायाः मुद्रासंग्रहोऽपि भारतीयसंग्रहालयाय प्रदत्तः। संस्थायाः प्रेरणया अकुण्ठितदानेन च वर्तमानकाले भारतीयसंग्रहालयः विश्वस्य एकः महत्त्वपूर्णः संग्रहालयः सञ्जातः। संस्थायाः कार्यक्रमविवरणस्य (सभायां पठितैः प्रबन्धादिभिः सह) एशियाटिक् रिसर्चेस् इति पत्रिकायाम् अष्टाशीत्युत्तरसप्तदशशततमेस्वीयाब्दादेव प्रकाशः समारब्धः। अष्टाशीत्युत्तर-सप्तदशशततमेस्वीयाब्दात् अष्टत्रिंशदुत्तराष्टादशशतमेस्वीयाब्दं यावत् अस्याः पत्रिकायाः विंशतिः खण्डाः प्रकाशिताः। ततः एतेषां खण्डानां विषयाणां निघण्टुरूपेण अन्योऽपि एकः खण्डः प्रकाशितः। संस्थायाः प्रयोजनं पूरयितुम् एशियाटिक् रिसर्चेस् इति पत्रिका पर्याप्ता नासीदित्यतः किञ्चित् कालं यावत् अवशिष्टं तथ्यादिकं होरेस-होमेन-विलसेन इत्येनन प्रवर्तितयोः "क्वार्टर्लि ओरियण्टल् जर्नल्" (१८२१-१८२७) इति "ट्रान्जक्शन्स् आफ् दि मेडिकेल् अण्ड् फिजिक्यल् सोसाइटि" इति च पत्रिकयोः प्रकाशितं भवति स्म। सप्तविंशत्युत्तराष्टादशशततमे ईस्वीयाब्दे एशियाटिक् रिसर्चेस् इति पत्रिकायाः परिपूरकयोः एतयोः पत्रिकयोः प्रकाशः स्थगितः। अतः ऊनत्रिंशदुत्तराष्टादश-शततमेस्वीयाब्दे जे. डि. हारबर्ट इत्यस्य 'ग्लिनिंस् इन् सायेन्स्' इति पत्रिकायाम् एतेषां प्रकाशः सञ्जातः। त्रिंशदुत्तराष्टादशशततमे-स्वीयाब्दे जेम्स्-प्रिन्स्पेप्-महोदयः अस्याः पत्रिकायाः भारं गृहीत्वा संस्थायाः अनुमत्या अस्याः नाम परिवर्तितवान्। द्वात्रिंशदुत्तराष्टादशशततमेस्वीयाब्दे इयं पत्रिका "जर्नल् आफ् दि एशियाटिक् सोसाइटि आफ् बेङ्गाल्" इति नाम्ना प्रथमवारं प्रकाशिता। दशवर्षाणि यावत् जेम्स्-प्रिन्सेप्-महोदयः स्वधनमुपयुज्य आत्मकर्तव्यतया अस्याः पत्रिकायाः प्रकाशनमकरोत्। द्विचत्वारिंशदुत्तराष्टादशशततमे-स्वीयाब्दे संस्थायाः स्वीयपत्रिकायाः एशियाटिक् रिसार्चेस् इत्यस्याः विलोपे सति संस्था प्रिन्सेप्-महोदयेन प्रवर्तितायाः "जर्नल् आफ् दि एशियाटिक् सोसाइटि आफ् बेङ्गाल्" इति पत्रिकायाः भारमग्रहीत्। प्रथमावृत्तौ इयं पत्रिका भागद्वयोपेतैः पञ्चसप्ततिखण्डैः अन्यैश्च कैश्चित् खण्डैः सह प्रकाशिता। पञ्चषष्ट्युत्तराष्टादशशततमेस्वीयाब्दात् चतुरधिकोनविंशति-शततमेस्वीयाब्दं यावत् संस्थायाः कार्यक्रमविवरणं चत्वारिंशत्सु खण्डेषु प्रकाशितम्। पञ्चाधिकोनविंशतितमेस्वीयाब्दात् चतुस्त्रिंशदधिकोनविंशति-तमेस्वीयाब्दं यावत् संस्थायाः पत्रिका कार्यक्रमविवरणसमेता (द्वितीयावृत्तिः) त्रिंशत्सु खण्डेषु प्रकाशिता। पत्रिकायाः तृतीयावृत्तौ (१९३५-१९५८) चतुर्विंशतिः खण्डाः प्रकाशिताः। साहित्यं विज्ञानं वार्षिकविवरणं च एतेषु खण्डेषु अन्तर्भवन्ति। ऊनषष्ट्युत्तरोनविंशतितमेस्वीयाब्दे अस्याः पत्रिकायाः चतुर्थावृत्तिः समारब्धा। त्रिपञ्चाशदुत्तरोनविंशति-तमेस्वीयाब्दस्य ऊनविंशखण्डात् इयं पत्रिका "जर्नल् आफ् दि एशियाटिक् सोसाइटि" इति नाम्ना प्रकाशिता। एतद्विहाय संस्थायाः द्वादशखण्डात्मकं 'मेमोयारस्' (Memoirs) तथा प्रतिविषयं दशखण्डात्मकं पुस्तकं (मनोग्राफस्) प्रकाशितम्। एकशतवर्षेभ्यः प्राक् एशियाटिक् सोसाइटि इति संस्था बिबलिओथेका इण्डिया इति ग्रन्थमालायाः परिकल्पनामकरोत्। अद्यावधि अस्यां ग्रन्थमालायाम् अशीत्युत्तरषट्शतं अनर्घ्याणि पुस्तकानि कुशलैः विद्वद्भिः सम्पादितानि अनूदितानि परञ्च

प्रकाशितानि। संस्कृत-फारसी-अरबी-तिब्बतीय-वङ्ग-मैथिली-राजस्थानी-काश्मीरी-प्रभृतीनां प्राच्यभाषाणाम् एतावतां ग्रन्थानां सुष्ठु सम्पादनम् अनुवादः प्रकाशश्च अस्याः संस्थायाः अनुपमकर्मकुशलतायां प्रमाणानि सन्ति। तिब्बतीयभाषायाः तिब्बतस्य विद्याचर्चायाः च मार्गं समग्रं विश्वं प्रदर्शितवती इयं संस्था। बिबलिओथेका इण्डिया इति ग्रन्थमालायाः एतावतां पुस्तकानां प्रकाशनं विहाय संस्थायाः साहाय्येन इतोऽपि प्रायेण चत्वारिंशत् प्राचीनग्रन्थाः सम्पादिताः प्रकाशिताश्च। प्राचीनमातृकाणां विषये संस्थया नैकानि प्रतिवेदनान्यपि (रिपोर्ट्) प्रकाशितानि। राजा राजेन्द्रलालमित्रः हरप्रसादशास्त्री इत्यादिभिः प्राच्यविद्यापारङ्गतैः रचितानामेतेषां प्रतिवेदनानां साहाय्येन बहूनाम् अनर्घ्याणां पुस्तकानां चिरन्तन्याः विस्मृतेः उद्धारः समभवत्। सम्प्रति संस्थायाः पाठागारः पञ्चसु विभागेषु विभक्तः – १) साधारणविभागः २) संस्कृतविभागः ३) इस्लामविभागः ४) भोटमङ्गलविभागः ५) लेखमालामुद्राविभागः। साधारणविभागे विंशतिसहस्राधिकैकलक्षम् युरोपीयभाषासु मुद्रितानि पुस्तकानि सन्ति। तेषु अधिकानि पुस्तकानि भारततत्त्वभाषातत्त्वैशियाप्रदेशीय लोकसाहित्यविज्ञानसम्बद्धानि सन्ति। एतेषु पुस्तकेषु पञ्चदशशतकस्य अन्तिमभागे मुद्रितानि पुस्तकान्यपि सन्ति। अस्य संग्रहस्य बहूनि पुस्तकानि अन्यत्र दुर्लभानि। विश्वस्य विभिन्नेषु स्थानेषु विभिन्नासु भाषासु प्रकाशितानां गवेषणामूलानां सामयिकपत्रिकाणां संग्रहोऽपि अस्य विभागस्य वैशिष्ट्यम्। संस्थायाः संस्कृतविभागे मुद्रितानि अमुद्रितानि इति उभयविधान्यपि पुस्तकानि सन्ति। अस्मिन् विभागे अष्टाविंशतिसहस्रं मातृकाः संगृहीताः। एतासु प्राचीनतमायाः मातृकायाः लिपिकालः सप्तमशतकम्। भारतवर्षस्य प्रायेण प्रतिभाषासु प्रचलितेषु प्रतिलिपिषु च लिखिताभ्यः एताभ्यः मातृकाभ्यः भारतविद्यायाः अनेकासां विस्तृतशाखानां प्राचीनकालीनसमृद्धेः परिचयः प्राप्यते। एतासु मातृकासु काश्चन चित्रितमातृका अपि सन्ति। एतासु काश्चन दशमशतके लिखिताः। एतासु मातृकासु हस्तनिर्मितकागदं विहाय तालभुर्जपत्रादीनामपि उपयोगः कृतः। इस्लामविभागे मुद्रितग्रन्थान् विहाय अरबीफार्सीतुर्कीपुस्तादिभाषासु लिखिताः षड्सहस्रं मातृकाः सन्ति। एतासु काश्चन मातृकाः चित्रिताः। इस्लामसंग्रहस्य काश्चन मातृकाः एकदा मोगलसम्राजां राजपाठगारे संरक्षिताः भवन्ति स्म। भोटमङ्गलविभागे (सिनो-तिबेटियन् सेक्शन्) चीनीतिब्बतीभाषयोः मातृकाः विहाय चीनीभाषायां काष्ठोपरि लिखिताः मातृकाः सन्ति (xylographs)। चीनीभाषायां लिखिताः मातृकाः भारतीयबौद्धशास्त्रस्य अनुवादाः एव। एतद्विहाय अस्मिन् विभागे बर्मायवद्वीपश्याम-सिंहलदेशेभ्यः संगृहीताः तत्तद्देशस्य भाषासु लिखिताः मातृका अपि सन्ति। लेखमालामुद्राविभागे ईशापूर्वतृतीय-शतकात् अष्टादशशतकं यावत् लिखिताः प्रायेण पञ्चाशत् ताम्रशासनानि सन्ति। षडधिकोनविंशतितमेस्वीयाब्दं यावत् संस्थया संगृहीताः प्राचीनमुद्राः भारतीयसंग्रहालयाय प्रदत्ताः। षडधिकोनविंशतितमेस्वीयाब्दात् परं संगृहीताः मुद्राः एव सम्प्रति संस्थायाः पाठागारे उपलभ्यन्ते। संस्थायाः ग्रन्थागारे संरक्षितानां मातृकाणां तालिका अनेकेषु खण्डेषु प्रकाशिता, अन्येषाञ्च खण्डानां प्रकाशः भविष्यति। अध्ययनाय गवेषणायै च संस्थायाः ग्रन्थालयः विद्यापिपासूनां कृते सर्वदा उद्घाटितद्वारः। संस्थाप्रतिष्ठायाः परं विंशतिवर्षाणि यावत् सर्वोच्चन्यायालयस्य "ग्राण्ड् जुरी" इति प्रकोष्ठे संस्थायाः सभा अनुष्ठिता भवति स्म। चतुर्नवत्युत्तरसप्तदशशततमेस्वीयाब्दे संस्थायाः सभापतेः स्यार् विलियमजोन्स-महोदयस्य देहत्यागात्परम् अस्य "ग्र्याण्ड् जुरी रुम्" इत्यस्य व्यवहारमादाय समस्यायामुत्थितायां संस्थाप्रमुखाः

संस्थायै एकस्य भूखण्डस्य प्रदानाय सर्वकारम् अनुरुरुधुः। ये संस्थायाः सदस्याः भवितुमिच्छन्ति तैः प्रार्थिभिः द्वे स्वर्णमुद्रे प्रवेशमूल्यत्वेन दातव्ये इति स्थिरीकृतम्। प्रत्येकं सदस्याः साहाय्यरूपेण यामेकां स्वर्णमुद्रां मासत्रये दास्यन्ति तथा प्रवेशमूल्यत्वेन याः स्वर्णमुद्राः स्वीकरिष्यन्ते संस्थायाः गृहनिर्माणे तासामेव उपयोगः करिष्यते इत्यपि स्थिरीकृतम्। पञ्चाधिकाष्टादशशततमेस्वीयाब्दे सर्वकारः कलिकातायाः पार्क्-स्ट्रिट्-प्रदेशे एकं भूमिखण्डं संस्थायै प्रादात्। सर्वकारीयपूर्तविभास्य प्रमुखेन लक्-महोदयेन (Captian Lock) या परिकल्पना कृता तदनुसारेण संस्थायाः भवनम् अष्टाधिकाष्टादशशततमेस्वीयाब्दे निर्मितम्। प्रायेण विगतं सार्धैकशतकं यावत् इदं भवनमेवसंस्थायाः कर्मकेन्द्रम्। १नं पार्कस्ट्रिट्वदेशे एसियाटिक् सोसाइटि इत्यस्य भवनं कलिकातायाः प्राचीनेषु भवनेषु अन्यतमं वर्तते। ऊनपञ्चाशदुत्तराष्टादशशततमेस्वीयाब्दे तत्संलग्नानां केषाञ्चित् भूखण्डानां स्वीकारात् संस्थाभवनं किञ्चित् विस्तृतं जातम्। संस्थायाः कार्यक्रमस्य विस्तारात् सम्प्रति अस्मिन् सुविशालेऽपि भवने स्थानाभावः अनुभूयते इत्यतः भारतपश्चिमवङ्गसर्वकारयोः अर्थसाहाय्येन पश्चिमदिशि चौरङ्गीसरण्याभिमुख्येन अस्य भवनस्य विस्तारः कृतः। संस्थायाः भवने प्रसिद्धैः युरोपीयैः शिल्पिभिः अङ्कितानि नैकानि चित्राणि संरक्षितानि सन्ति। Rubens, Guido, Domenichino, Reynolds, Canalotti, Kettle, Home, Chinery, Poe, Daniel, Say – इत्यादिभिः विश्वप्रसिद्धैः शिल्पिभिः अङ्कितानां चित्राणां समावेशात् संस्थायाः भवनं चित्रप्रियैः अवश्यमेव द्रष्टव्यम्। प्रसिद्धैः भास्करैः निर्मिताः काश्चन मर्मरमूर्तयोऽपि संस्थायाः आभ्यन्तरीणभागस्य सौन्दर्यं वर्धयन्ति। येषां मूर्तयः अत्र संरक्षिताः सन्ति तेषां सर्वेषां सेवया संस्थायाः विश्वस्य च ज्ञानराशिः समृद्धो जातः। संस्थायाः भवने प्रवेशः क्रियते चेत् दिवङ्गतानां ज्ञानसाधकानां मूर्तयः शरीरिरूपेण उत्तरसाधकानां साधनं साग्रहं पश्यन्ति इत्यनुभूयते। विलियमजोन्स्-महोदयेन यदा प्रतिष्ठा कृता तदा अस्याः संस्थाया नाम आसीत् The Asiatick Society। पञ्चविंशत्युत्तराष्टादश-शततमेस्वीयाब्दे एशियाटिक्-शब्दात् K इति वर्णस्य परित्यागः कृतः। द्वात्रिंशदुत्तराष्टादशशतमेस्वीयाब्दे जेम्स्-प्रिन्सेप्-महोदयः संस्थायाः अनुमित्या "ग्लिनिंस् इन् सायेन्स्" इति पत्रिकां "जर्नल् आफ् दि एशियाटिक् सोसाइटि आफ् बेङ्गाल्" इति नाम्ना प्रकाशितवान्। लण्डनस्थेन "रयाल् एशियाटिक् सोसाइटि" इत्यनेन सह नामसादृश्यात् पाठकाः भ्रान्ताः स्युः इति विचिन्त्य प्रिन्सेप्-महोदयः इमां "जर्नल् आफ् दि एशियाटिक् सोसाइटि आफ् बेङ्गाल्" इति नाम्ना प्रकाशयामास। पत्रिकायाम् "एशियाटिक् सोसाइटि आफ् बेङ्गाल्" इत्यभिधानं बहुधा व्यवहृतमित्यतः एकपञ्चाशदुत्तराष्टादशशततमेस्वीयाब्दात् सर्वत्र अस्यैव नाम्नः व्यवहारः आरब्धः। चतुस्त्रिंशदुत्तरोनविंशतितमेस्वीयाब्दे जनवरीमासस्य पञ्चदशे दिनाङ्के संस्थायाः सार्धैकशतवर्षाणि सञ्जातानि। तदा सदस्याः राजानुमत्या संस्थायाः नाम "रायल् एशियाटिक् सोसाइटि" इति कर्तुं सिद्धान्तं गृहीतवन्तः। वाइसरायमाध्यमेन प्राप्तायाः राजानुमत्याः अनुसारेण षड्त्रिंशदुत्तरोनविंशतितमेस्वीयाब्दात् संस्था "रायल् एशियाटिक् सोसाइटि आफ् बेङ्गाल्" इति नाम्ना प्रसिद्धा जाता। भारतवर्षस्य स्वतन्त्रताप्राप्तेः परं रायल् इति बेङ्गाल् इति च शब्दद्वयं परित्यज्य एकपञ्चाशदुत्तरोनविंशतितमेस्वीयाब्दस्य जुलईमासात् संस्था तस्याः प्रथमममभिधानं स्वीकृत्य "एशियाटिक् सोसाइटि" इति नाम्ना पुनः प्रथिता जाता। ऊनषष्ट्युत्तरोनविंशतितमेस्वीयाब्दस्य नवम्बरमासस्य सप्तमे दिनाङ्के एशियाटिक् सोसाइटि इति संस्थया परिकल्पितस्य

सम्प्रसारितव्यस्य भवनस्य भित्तिप्रस्तरस्थापनकाले भारतसर्वकारस्य तदानीन्तनः वैज्ञानिकगवेषणायाः संस्कृतेश्च मन्त्री पण्डितः ड. हुमायुकबीरमहोदयः ज्ञानविज्ञानजगति संस्थायाः प्रायेण शतवर्षव्यापिनं कार्यक्रमं स्मृत्वा यथार्थमेव आह – राजनैतिकविप्लवं सामरिकाभियानलब्धविजयं चापेक्ष्य एकस्याः अभिनवभावनायाः जन्म अधिकमहत्त्वपूर्णम्। चतुरशीत्युत्तरसप्तदशशततमेस्वीयाब्दे एशियाटिक् सोसाइटि इत्यस्य प्रतिष्ठा मनुष्यसमाजस्य इतिहासे एका महत्त्वपूर्णा घटना। यतो हि अस्मात् दिवसात् एकस्या अभिनवभावनायाः अभ्युदयो जातः।[1] ज्ञानविज्ञाननभसि एशियाटिक् सोसाइटि इति संस्थायाः महासेवकस्य अस्याः प्रतिष्ठातुः विलियमजोन्स्-महोदयस्य भास्वरस्मृतिः चिरं भारतवासिनां हृदये विराजिष्यते इत्याशा।

**संस्कृतसाधनायां तस्य प्रयासः** – १७८९ खीष्टाब्दे जोन्सः महाकविकालिदासेन रचितस्य अभिज्ञानशाकुन्तलम् इति नाटकस्य आङ्गलानुवादं Sacontala or the Fatal Ring इति प्रकाशितवान्। इतः प्राक् न किमपि संस्कृतनाटकम् कस्याञ्चित् युरोपीयभाषायाम् अनुदितम् आसीत्। जोन्स एव सर्वप्रथमं कालिदासस्य रचनां बहिर्जगति प्रचारितवान्। जोन्सस्य आङ्गलानुवादम् आश्रित्य १७९१ खीष्टाब्दे गेअर्ग-फरष्टारेण जार्मानभाषायां शकुन्तलानाटकस्य अनुवादे प्रकाशिते तत् महाकव्योः ग्येटे-हार्डारयोः दृष्टिम् आकृष्टवत्। शकुन्तलानाटकस्य रचनानैपुण्येन विमोहितः सन् ग्येटे लिखितवान् यत् वसन्तस्य पुष्पस्य किञ्च परिणतफलस्य तथा स्वर्गमर्त्ययोः सुलभं समावेशं यदि कश्चित् द्रष्टुम् इच्छति तर्हि शकुन्तलानाटकम् एव तस्य उपजीव्यम् अस्ति। १७९१ खीष्टाब्दे जोन्सः विष्णुशर्मणा रचितस्य हितोपदेशस्य आङ्गलानुवादं प्रकाशितवान्। अयम् अनुवादः जोन्सस्य ग्रन्थावल्ल्याः त्रयोदशभागे प्रकाशितं जातम्। परस्मिन् वत्सरे जोन्सः महाकविकालिदासरचितस्य ऋतुसंहारकाव्यस्य सम्पादनं प्रकाशितवान्। इदं पुस्तकं संस्कृतभाषायाः प्रथमम् अनुदितं पुस्तकम्। तस्य मृत्योरनन्तरं अयम् अनुवादः तस्य सम्पूर्णग्रन्थावल्ल्याम् अन्तर्भुक्तः सन् प्रकाशितः सञ्जातः। हिन्दुस्मृत्यनुसारं भारतशासनस्य सौकर्याय चार्लस-विलकिन्सः मनुसंहितायाः अनुवादम् आरब्धवान्; केवलं त्रिभागमध्ये एकभागस्य अनुवादानन्तरम् विलकिन्सेन अस्मिन् कर्मणि त्यक्ते सति जोन्सः अस्य कार्यस्य भारं गृहीत्वा विपुलपरिश्रमेण इदं कार्यं समाप्तवान्। जोन्सस्य मृत्योरनन्तरं ग्रन्थोऽयं प्रकाशितः। (The Institutes of Hindu Law or the Ordinances of Menu according to glossary of Cullucatta, 1794) इस्लामधर्मस्य उत्तराधिकारविषयेऽपि जोन्सः एकं ग्रन्थं रचितवान् (Mohammedan Law of Succession of property to intestates and Mohammedan Law of inheritance-1792) संस्कृताध्ययनस्य कृते अतीव परिश्रमकारणात् १७८७ खीष्टाब्दे जोन्सः अस्वस्थः सञ्जातः। अस्मिन् काले भारतीय-उद्भिद्विद्यां प्रति स आकृष्टः सञ्जातः, एवञ्च अस्याम् उद्भिद्विद्यायां गवेषणार्थं स बहूनि तथ्यानि संगृहीतवान्। १७९१ खीष्टाब्दस्य अक्टोबरमासे इङ्ग्लैण्डे ओयारेन-हेस्टिंसं प्रति पत्रं लिखित्वा स ज्ञापितवान् यत्, उद्भिद्विद्याचर्चा तथा पण्डितैः सह देवभाषायां (संस्कृते) वार्तालाप एव तस्य समीपे सर्वापेक्षया सुखप्रदम् अस्ति। (द्र: Asiatic Jones,

[1] The birth of an idea is of greater importance than most political developments or military victories; and the foundation of the Asiatic Society of Bengal in 1784 is important in the history of man as it marks the emergence of a new idea. – Dr. Humayun Kabir

Arberry, P. 27)। आधुनिकभारतीय-उद्भिद्विद्यायां विज्ञानसम्मतगवेषणायाः अन्यतमप्रवर्तकस्य जोन्सस्य नाम चिरं स्मरणीयं सम्पादयितुं उद्भिद्-विज्ञानी डाः विलियम-रक्सवर्गः भारतीयसाहित्ये सुपरिचितस्य अशोकवृक्षस्य "जोनेसिया अशोक" (Jonesia Asoka) इति नामकरणं कृतवान्। अयं वृक्षः उद्भिद्विज्ञाने रक्सवार्गप्रदत्तेन नाम्ना एव ख्यातिं गतः वर्तते। उद्भिद्विज्ञानं विहायापि भारतस्य अतीतः इतिहासः, भूवृत्तान्तं, हिन्दुसङ्गीतं तथा प्राणिविज्ञानं चेत्येतेषु विषयेषु अपि जोन्सस्य प्रबलम् आकर्षणम् आसीत्। एवंविधेषु नानाप्रकारकेषु विषयेषु गवेषणायाः अपि स एव पथिकृत् अवर्तत।

**उपसंहृतिः** - सोसाइटि-प्रतिष्ठायाः परं सोसाइटि-इत्यस्य एव आदर्शेन १८८२ खीष्टाब्दे पारीनगर्यां सोसाइटि-एशियाटिक इति तथा १८२३-खीष्टाब्दे लण्डने रयाल-एशियाटि-अव-ग्रेट्-ब्रिटेन-यान्ड-आयरल्याण्ड इति संस्थाद्वयं प्रतिष्ठितम्। इमं दृष्टान्तम् अनुसृत्य एव उत्तरकाले अमेरिकायाः ओरियेन्टाल-सोसाइटि (Deutsce Morgenlandische Gessellschaft, १८४४) इति प्रतिष्ठितम्। अनन्तरं, मुम्वाई, सिंहल, चीन, तथा मलय – चेत्यादिषु रयाल-एशियाटिक-सोसाइटि-आफ्-ब्रिटेन-यान्ड-आयरलैण्ड इत्यस्य शाखा प्रतिष्ठिता। कलिकातास्थम् एशियाटिक-सोसाइटि एतेषां प्रतिष्ठानानां प्रधानं प्रेरणदं वर्तते इति निःसन्देहेन वक्तुं शक्यते। एशियाटिक-सोसाइटि – इत्यस्य प्रतिष्ठानन्तरं भारतस्य तदानीन्तनं राष्ट्राध्यक्षं जनरेल-ओयारेन-हेस्टिंसं प्रति तत्प्रतिष्ठानस्य सभापतिपदस्य ग्रहणाय अनुरोधः कृतः आसीत्। सोसाइटि – इत्यस्य उद्देश्यं प्रति पूर्णसमर्थनसत्त्वेऽपि समयाभावकारणात् हेस्टिसः अस्य पदस्य ग्रहणाय न सम्मतः जातः, ततः तदनुरोधेन एव जोन्सः १७८४-खीष्टाब्दे फेब्रुवारी-मासस्य पञ्चमदिनाङ्के स्वप्रतिष्ठितस्य सोसाइटि इत्यस्य प्रथमः सभापतिः सञ्जातः। स्वजीवनस्य अन्तिमदिवसं यावत् जोन्सः इमम् आसनं न परित्यक्तवान्। जोन्सः प्रतिवत्सरं फेब्रुवारी-मासे सोसाइटेः साधारणसभायां प्राच्यविद्यायाः कञ्चन विषयम् आदाय भाषणं समुपस्थापयति स्म। १७८४ तः १७९७-पर्यन्तं स इत्थं दश भाषणानि प्रदत्तवान्। १७८६-खीष्टाब्दे जोन्सस्य वात्सरिकभाषणस्य विषयः आसीत् हिन्दुजातेः इतिहासः तथा संस्कृतिः एतद्भाषणदानसन्दर्भे जोन्सः इदं मतं प्रकाशितवान् यत् युरोपस्य प्राचीनाः भाषाः तथा प्राचीनपारसिकभाषा जेन्दभाषा तथा संस्कृतभाषा समसूत्रात् उद्भूते समगोष्ठ्याः भाषे स्तः। जोन्सात् प्राक् इटालीदेशीयः पण्डितः Sasseti(१५८५) Coerdoux(१७६८)-इत्यादयः प्रमुखाः युरोपीयाः पण्डिताः संस्कृतेन सह ग्रीक-ल्याटिन-प्रभृतीनाम् युरोपीयभाषाणां सादृश्यं लक्ष्यीकृतवान्, परन्तु ते कस्मिंश्चित् सुनिश्चिते सिद्धान्ते उपनेतुं न शक्तवन्तः। जोन्सस्य एतद्घोषणावशादेव युरोपे व्याकरणचर्चायाः आरम्भः जातः। १८०८-खीष्टाब्दे व्याकरणपण्डितः फ्रेडरिथ-श्लेगेलः(१७७२-१८२९) तस्य 'भारतीयभाषा तथा तस्याः ज्ञानभाण्डारः' (Uber die Sprache und Weiheit der Inder, १८०८)- इति नामकग्रन्थे जोन्सस्य अस्याः उक्तेः प्रतिध्वनिं कृतवान्। जर्मनपण्डितः रोपः (F.Bopp, १७८१-१८६७) जोन्सेन घोषितं मतं दृढभित्तौ प्रतिष्ठापितवान्। अस्मिन् सन्दर्भे अपरस्य जर्मनपण्डितस्य ग्रीमस्य (Jakob Ludeig Karl Grimm, १७८५-१८६३) तथा डेनमार्कवासिनः पण्डितस्य रेस्मास-रासस्य नाम अपि उल्लेख्यम् अस्ति। उपरोक्तभाषणं विहाय जोन्सेन प्रदत्तानां वात्सरिकभाषणानां अधोलिखिततालिकातः जोन्सस्य बहुविस्तृतस्य अध्ययनस्य तथा नानाविषये व्याप्तायाः

अनुसन्धित्सायाः परिचयः प्राप्यते। On the Orthography of Asiatik words-1784; On the Gods of Italy, Grecce and India 1785, On the Arabs 1787; On the Tartars 1788; On the Parsians 1789; On the Chinese 1790; On the Borders (Mountaincers & Islands of Asia), 1791; On the origin and Family of Nations 1792; On the Asiatic History; Civil and Natural 1793.[1]

**सहायकग्रन्थाः**

1. Teignmouth, Lord. 1807. The Works of Sir William Jones. Volume 3.
2. Park, Thomas. 1808. *The Poetical Works of Sir William Jones. Volume 1.*
3. *Jones, Sir William.1822. The Poems of Sir William Jones. Volume 1.*
4. *Johnson, Samuel. 2001. The Works of the English poets. Volume 32.*
5. Arberry, A.J. 1946. The life and influence of Sir William Jones.

**Author's Detail**

Address: रामकृष्णमिशन् विद्यामन्दिरस्य (कलिकाताविश्वविद्यालयस्य)
बेलुरमठम्, हाओडा,
पश्चिमवङ्गः, 711202, भारतम्।

*****************************

[1] जोन्सस्य इमानि भाषणानि तेनैव सम्पादिते सोसाइटि-मुखपत्रे एशियाटिक रिसर्चेस पत्रिकायां सन्निविष्टानि। (एशियाटिक-रिसार्चेस, भागः १-४)। इमानि भाषणानि जोन्सस्य सम्पूर्णग्रन्थावल्ल्याम् अपि स्थानम् अलभन्त।

# हिमाचलप्रदेशस्य प्राचीनाभिलेखेषु पाण्डुलिपिषु च संस्कृतम्

# Sanskrit in Ancient Inscriptions and Manuscripts of Himachal Pradesh

Dr. Sunny Kumar

**Abstract**

Ancient manuscripts, inscriptions, copper and other metal leaf inscriptions demonstrate the historical importance of the literary wealth of the region. Due to the availability of Bhurja leaves in Himachal Pradesh, manuscripts written on Bhurja leaves are abundant in this region. Similarly, various inscriptions and pillar inscriptions are found in many temples in this snow-covered region. In the diverse environment of Himachal Pradesh, preservation of manuscripts written on handmade brown paper and other materials for a long time is a very difficult task., Sanskrit is often the predominant language in terms of language. The manuscripts, inscriptions and columnar inscriptions in various scripts like Sharada, Tankari and Pavuchi in Himachal Pradesh are mostly devoted to Sanskrit. This research paper describes the nature of Sanskrit in the inscriptions of King Meruvarman, the inscriptions of King Sahilvarman, the copperplate inscriptions of Yugakaravarman, and various manuscripts. A rich tradition of Sanskrit is still prevalent in Himachal Pradesh. This paper presents the glorious history of Sanskrit in Himachal Pradesh by reviewing inscriptions, copperplates and other inscriptions and ancient manuscripts.

**कूटशब्दाः**- पाण्डुलिपिः. अभिलेखः. हिमाचलप्रदेशः, साञ्चा, टांकरी, शारदालिपि, पावुची, संस्कृतपाण्डुलिपिग्रन्थाः,

******************************

हिमाचलप्रदेशः भारतस्य उत्तरभूभागे विद्यमानः अतीव रमणीयः प्रदेशः। यद्यपि राजनैतिकदृष्ट्या पूर्णराज्य-रूपेण अस्य सङ्घटनं 1971तमे वर्षेऽभवत् तथापि ऐतिहासिकदृष्ट्या अस्य भूभागस्य महत्त्वमत्यधिकं प्राचीनं वर्तते। हिमाचलप्रदेशः पर्वतराजहिमालयस्य उत्तुङ्गशिखरैः सुहरितैः रमणीयैः वनप्रान्तैः, स्वच्छनिर्मलतोयनदिभिः, पावनतीर्थैः सह युक्तः, भौगोलिकदृष्ट्या यादृशं विविधतापूर्णं सुशोभते तादृशमेव संस्कृतवाङ्मयमन्दाकिन्या आप्लावितं वर्तते। अत्र पुराकालादारभ्य अद्यावधिः संस्कृतसाहित्यस्य अजस्त्रं धारा सततं प्रवहमाना दृश्यते। हिमाचलप्रदेशस्य विविधराजवंशानां शासनकालः संस्कृतसाहित्यस्योन्नत्त्यर्थं समाजे संस्कृतस्य प्रचारप्रसारार्थञ्च सर्वदा सकारात्मकरूपेण महत्त्वपूर्णमासीत्। अत्रत्यानां राजवंशानां नृपाः प्रायः संस्कृतज्ञाः संस्कृतानुरागिणश्चासन्। वैदिककालादारभ्य अस्यां देवभूमौ संस्कृतवाङ्मयस्य विपुलाः रचनाः अभवन्, पुनः कालान्तरेऽपि अत्रत्यैः विंद्वद्भिः संस्कृतकविभिश्च संस्कृतवाङ्मयस्य विविधासु धारासु साहित्यं परिसृष्टम्। अस्मिन् भूभागे अत्यधिकमात्रायामुपलब्धाः पाण्डुलिपयः अभिलेखाश्च अस्य प्रमाणभूतास्सन्ति। यद्यपि अनेकेषां ग्रन्थानां पाण्डुलिपयः कालकवलिताः तथापि हिमाचलप्रदेशे प्राचीनाभिलेखानां पाण्डुलिपीनाञ्च विपुलसम्पदा अद्यत्वेऽपि उपलब्धा वर्तते।

ऐतिहासिकमहत्त्वाधायकः प्राचीनहस्तलिखितो ग्रन्थः, कश्चित् कवेः प्राचीनहस्तलिखिता कृतिर्वा 'पाण्डुलिपिः' इत्युच्यते। एतासां पाण्डुलिपीनां कृते 'मातृकाग्रन्थः, 'पीताभग्रन्थः' 'हस्तप्रतिः, 'लिपिग्रन्थ'इत्यादीनि नामान्यपि प्रचलितानि सन्ति। लिपयः अपि बहुविधाः भवन्ति यथा सम्प्रति संस्कृतं देवनागरीलिप्या लिख्यते, पूर्वकाले ब्राह्मीलिप्या संस्कृतं लिख्यते स्म। सर्वविदितमस्ति यत् संस्कृतं प्राचीनतमा भाषास्ति तस्मात् संस्कृते लिखितं साहित्यमपि विश्वस्य प्राचीनतमं साहित्यं वर्तते। भारतवर्षे श्रुतिपरम्परया अध्ययनाध्यापनं सममेव लेखनकलायाः अपि प्राचीनतमानि

साक्ष्याणि दृश्यन्ते। पाश्चात्यविदुषां बर्नेल-मैक्समूलरादीनां मतानुसारेण प्रायः 400 ईस्वीतः पूर्वकाले भारतवर्षे लेखनकलायाः प्रचलनं नैवासीत्।[1] कथनमेतत् निश्चप्रचं निराधारमेव यतोहि प्राचीन-भारतीयसभ्यतायां लेखनस्य प्रमाणानि अतीव प्राचीनानि दृश्यन्ते। पं-गौरीशंकरओझामहोदयानां तथा च पं-राजबलीपाण्डेयमहाभागादीनां भारतीयविदुषाम-नुसन्धानानुसारेण वैदिकसंहितासु ब्राह्मणग्रन्थेषु तथा चावान्तरसंस्कृतवाङ्मये पर्याप्तमात्रायां लेखनकलायाः प्रमाणानि दृश्यन्ते। तस्मिन् काले यद्यपि कण्ठस्थीकृतायाः विद्यायाः अधिकं महत्त्वमासीत् तथापि तस्मादेव कालात् भारतीयमनीषायां लेखनकलायाः अपि समुचितो विकासः आसीत्। यथोक्तं याज्ञवल्क्यशिक्षायाम् - **गीती शीघ्री शिरःकम्पी तथा च लिखितपाठकः अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः।**[2] श्लोकेऽस्मिन् वेदमन्त्राणां लिखितपाठकः यद्यपि निन्दितः तथापि यदा लेखनस्य ज्ञानं स्यात् तदैव तस्य निन्दापि सम्भाविता। एतादृशैरुदाहरणैः स्पष्टं भवति यत् भारतीयानां कृते लेखनस्य ज्ञानमतीव प्राचीनकालादेवासीत्। पं-गौरीशंकरओझामहोदयेन स्वकीये 'प्राचीन-लिपिमाला' इत्यभिधाने ग्रन्थे संहिता-ब्राह्मण-आरण्यक-पाणिनिव्याकरण-सूर्यसिद्धान्त-महाभाष्यादि-ग्रन्थानां विविधप्रमाणानामाधारेण सिद्धान्तितं यत् वैदिकसंहिताकाले ब्राह्मणकाले च लेखनस्य परिचयः आसीत्।[3] एतदनन्तरं प्रश्नः समुदेति यत् का लिपिः प्राचीनतमा इति विषये इतिहासे उपलब्धासु सर्वासु लिपिषु ब्राह्मी-खरोष्ठीत्यादिप्राचीनतमानां लिपीनां उल्लेखः वर्तते। एतास्वपि ब्राह्मीलिपिरेव प्राचीनतमा स्वीक्रियते विद्वद्भिः। केषाञ्चित् पाश्चात्यविदुषां जेम्सप्रिंसेप-रावेलडीरोशेत्यादीनां मते ब्राह्मीलिपेः प्रादुर्भावः यवनानीलिपेः वर्णेभ्यः अभवत् परञ्च पं-राजबलीमहोदयेन स्वकीये ग्रन्थे प्रतिपादितं यत् ब्राह्मीलिपेः वर्णाः भाषाशास्त्रस्य दृष्ट्या अन्यदेशानां वर्णानामपेक्षया अत्युन्नताः लेखनस्य परिसूचकाश्च बृहद्वैदिकसाहित्यस्य स्रष्टृणां भारतीयमनिषीणां प्रतिभायाः परिणामोऽस्ति।[4] **'मन्त्रो वै ब्रह्म'**[5] इति श्रुतिवचनानुसारेण वेदमन्त्रादिज्ञानराशिः ब्रह्मेति शब्देनाभिधीयते, तथा च तेषां मन्त्राणां ज्ञानरूपब्रह्मणः लेखनरूपेण प्रकाशिका लिपिः 'ब्राह्मीलिपिः' इत्युच्यते। ब्राह्मीलिपेः प्रादुर्भावो भारतवर्षे वेदानां रक्षणार्थमेवाभवत्। सम्प्रति सम्राट्-अशोककालीनब्राह्मीलिपिः विशेषशैलीरूपेण समग्रभारते शिलालेखेषूपलभ्यते। भारतवर्षस्य नागरी-शारदा-गुरुमुखी-बंगला-तेलगु-ग्रन्थ-तमिलादिवर्तमानानां समस्तलिपीनां मूलं ब्राह्मीलिपिः एवास्ति।[6] लिपीनां विकासक्रमावलोकनेन ज्ञायते यत् भारतदेशस्य भौगोलिकविविधावशात् कालभेदाच्च ब्राह्मीलिपेः विविधाः शाखाः भारतस्य पृथक्-पृथक् राज्येषु प्रान्तेषु च प्रसृताः अभवन्। कश्मीरप्रान्तादारभ्य दक्षिणभारतपर्यन्तं विविधाः शरदा-नागरी-गुरुमुखी-नन्दिनागरी-बंग-ग्रन्थ-तमिलादयः लिपयः भिन्न-भिन्नकालखण्डेषु शास्त्राणां ग्रन्थानाञ्च लेखने साधनभूताः अभवन्। हिमाचलप्रदेशे प्राचीनकालादेव शारदालिप्याः एव सर्वाधिकप्रसारः आसीत्, सप्तम-

---

[1] Burnell, A.C., 1878, South Indian Palaeography. Ludgate Hill London, Second Edition. p. 9.

[2] याज्ञवल्क्यशिक्षा, पदाधिकारः, श्लोक सं, 82

[3] ओझा, रायबहादुर पं.गौरीशंकर हीराचन्द, 1988, भारतीय प्राचीन लिपिमाला, पृ. 9.

[4] पाण्डेय,पं.राजबली, लोकभारती प्रकाशन इलाहाबाद, 1978, पृ. 45-46 तथा च तुलनात्मकफलकः. सं.-5

[5] शतपथ ब्राह्मण – 7.1.1.5

[6] **ओझा, रायबहादुर पं.गौरीशंकर हीराचन्द, भारतीय प्राचीन लिपिमाला**, 1988. पृ.13

अष्टमशताब्द्यारभ्य अस्याः प्रमाणानि हिमाचलप्रदेशे दृश्यन्ते। यद्यपि शारदालिप्याः उद्भवः शारदादेशे अर्थात् कश्मीरप्रान्ते अभवत् तथापि शारदालिप्याः प्राचीनतमः शिलालेखः सरांहांप्रशस्तिरूपेण हिमाचलप्रदेशस्य चम्बाजनपदे उपलभ्यते। हिमाचलप्रदेशस्य अन्याः टांकरी-लाहण्डा-चमियाली-पावुची-पंडवाणी-भ्यूंचाणी-चन्दवाणी-भट्टाक्षरी-इत्यादयः लिपयः शारदायाः एव उपलिपयः स्वीक्रियन्ते। शारदा-टाकरीलिप्योः वर्णमाला चित्रे प्रदर्शिता यथा **(द्रष्टव्या- चित्रसंख्या-01)**

टांकरी-लिपिः शारदायाः प्रवहमानं रूपमस्ति। त्वरितलेखनेन लेखन्याः उत्थापनं विना प्रवहमानलेखनेन शारदालिपिः टांकरीरूपेण परिवर्तिता अभवत्। यतोहि टांकरीलिप्याः इ-ई-उ-ए-ग-घ-चेत्यादिवर्णाः प्रत्यक्षरूपेण शारदासदृशाः प्रतीयन्ते। प्रवाहितरूपत्वात् टांकरीलिपिः पठनपाठने अपेक्षाकृत् क्लिष्टा वर्तते। अस्याः प्रसारः हिमाचलप्रदेशस्य विभिन्नप्रान्तेषु वर्तते। अस्याः एव चम्बाजनपदीयरूपः 'चमियालीलिपि'रूपेण प्रसृतो वर्तते।

पावुची-लिपिः हिमाचलप्रदेशस्य सिरमौर जनपदस्य खडकांह-जवलोग-भगनोलादिग्रामाणां विदुषां पण्डितानां लिपिः वर्तते। तेषां ज्योतिष-कर्मकाण्ड-अनुष्ठानपद्धत्यादिग्रन्थाः अस्यां लिप्यामेव सन्ति। तत्र सुप्रसिद्धः साञ्चाग्रन्थः अपि पावुचिलिप्यामेवास्ति। अस्याः लिपेः प्रसारः उत्तराखण्डस्य जौनसारजनपदे अपि दृश्यते। पावुचीलिपेः साञ्चाग्रन्थस्य देवनागरीलिप्यामनुवादस्य प्रकाशनं हिमाचलप्रदेशस्य कलासंस्कृतिभाषा-अकादम्या 2012तमे वर्षे कृतम्। यस्य ग्रन्थस्य अनुवादकार्यं श्रीदेवीरामपाण्डेयमहादयेन श्रीमनीरामशर्ममहोदयेन च विहितम्। चित्रे प्रदर्शितं यथा[1]। **(द्रष्टव्या चित्रसंख्या-02)**

पंडवाणी-चन्दवाणीलिप्योः प्रसारः शिमलाजनपदस्य ठियोग-चौपालादिक्षेत्रेषु वर्तते। ठियोग-उपमण्डलान्तर्गत-बलगक्षेत्रे तथा च चौपाल-उपमण्डलान्तर्गत मनेवटी-छतरौली-इत्यादिग्रामेषु पाण्डेयब्राह्मणानां पंडवाणी लिपिः वर्तते। एतेषां साञ्चा-इत्यादयः धार्मिकहस्तलिखितग्रन्थाः अनया एव लिप्या लिखिताः सन्ति। चौपाल-उपमण्डलान्तर्गत-भटेवडी-थरोचादिग्रामेषु 'चन्दवाण'नामकग्रन्थः भाटचन्द्रज्योतिष-माधारीकृत्य विरचितः चंदवाणीलिप्यामस्ति। एतदतिरिच्य चौपाल-उपमण्डलस्य तथा च सिरमौरजनपदस्य हरिपुरधार-कुणा-वेयोग-घटोल-सिद्धवोटी-इत्यादिग्रामेषु भाटब्राह्मणानां भट्टाक्षरीलिपिः वर्तते। उर्दु-फ़ारसी-इत्यादिलिपीन् अन्तरेण हिमाचलप्रदेशस्य सर्वासां लिपीनां विकासः ब्राह्मीलिपितः एव क्रमिकरूपेण अभवत्। श्री सा-आर-बी-ललितमहोदयानामनुसारेण ''हिमाचलप्रदेशे टांकरीलिपेः विकासः राजकार्यार्थम्, लाहण्डालिपेः विकासः व्यापारकार्यार्थं तथा च भट्टाक्षरीलिपेः विकासः ब्रह्मकार्यार्थमभवत्। भट्टाक्षरीलिपिः एव स्थानीय-नामभेदेन पावुची, चन्दवाणी, भ्यूंचाणी पंडवाणी चेति उपलिपिरूपेण परिवर्तिता अभवत्। हिमाचलप्रदेशस्य एतासु सर्वासु लिपिषु प्रायः संस्कृतनिष्ठता एव दृश्यते।'[2]

---

[1] साञ्चा, हिमाचल प्रदेश का प्राचीन ग्रन्थ. हिन्दी अनुवाद सहित, मूल पावुची लिपि सहित, हि. प्र, कला संस्कृति भाषा अकादमी शिमला। पृ. 78 एवं 214,

[2] ललित, सी. आर. बी., 2012, साञ्चा परम्परा (लेख), हिमाचल प्रदेश अभिलेख और पाण्डुलिपियां, हिमाचल प्रदेश कला संस्कृति एवं भाषा अकादमी. पृ, 116.

पाण्डुलिपयः लेखनाधारेण अनेकविधाः भवन्ति यथा ताडपत्रपाण्डुलिपयः, भूर्जपत्र(भोजपत्र)पाण्डुलिपयः, धातुपत्र(ताम्र-सुवर्ण-रजतपत्रादि)पाण्डुलिपयः। तद्वद्वेव हि बृहद्शिलास्तम्भादिषु लिखिताः प्राचीनराजादेशाः, धार्मिकलेखाश्च 'प्राचीनाभिलेखाः' इत्युच्यन्ते। सम्प्रतिभारते सर्वाधिकमात्रायां ताडपत्रेषु लिखिताः पाण्डुलिपयः उपलभ्यन्ते तथा च हिमाचलप्रदेशस्य सन्दर्भेऽत्र प्राकृतिकरूपेण ताडपत्राणामभावात् भूर्जपत्राणां सुलभतावशाच्च प्रदेशेऽस्मिन् भूर्जपत्रेषु लिखिताः पाण्डुलिपयः प्रचुरमात्रायां प्राप्यन्ते। सममेव हिमवत्प्रदेशेऽस्मिन् अनेकेषु मन्दिरेषु विविधशिलालेखाः स्तम्भलेखाश्च प्राप्यन्ते। हिमाचलप्रदेशस्य विविधतापूर्णे वातावरणे चिरकालपर्यन्तं भूर्जपत्रादिषु लिखितानां पाण्डुलिपीनां संरक्षणमतीव दुष्करं कार्यमस्ति। अत्र वर्षासु अत्यधिकार्द्रत्वात्, शरदि हिमाच्छादानात्, ग्रीष्मे अत्यधिकशुष्कताकारणाच्च पाण्डुलिपीनां संरक्षणस्य सुदुष्करं कार्यं विदुषां महता प्रयासेन, पाण्डुलिपीनां प्रतिलिपिकरणेन च अद्यावधिः अनेके पाण्डुलिपिग्रन्थाः संरक्षिताः। भूर्जपत्रादिषु लिखितानां पाण्डुलिपीनामपेक्षया शिलालेखाः, धातुपत्रलेखाः, स्तम्भलेखाश्च चिरकालस्थायिनः भवन्ति।

हिमाचलप्रदेशस्य पाण्डुलिपिषु प्राचीनाभिलेखेषु च लिपीनां बाहुल्यतायां सत्यामपि भाषादृष्ट्या संस्कृतभाषायाः एव प्राधान्यं प्रायशः दृश्यते। यथा चम्बानगरात् प्रायः द्वादश-कि-मी- सरांहाग्रामे चन्द्रशेखरस्य देवालयः वर्तते। लोकश्रुत्यानुसारेण देवालयस्यास्य निर्माणं राज्ञा साहिलवर्मणा कारितम्। परञ्च शिलालेखस्य लिप्यानुसारेण देवालयस्यास्य निर्माणं दशमशताब्द्यां निश्चीयते यच्च साहिलवर्मणः उत्तराधिकारिणः कालोऽस्ति। शिलालेखस्याधारेण चन्द्रशेखरदेवालयस्य निर्माणं 'सात्यकि'-नामधेयेन केनचित् राज्ञा तस्य पत्न्याः सोमप्रभायाः कृते कारितमिति। शिलालेखोऽयं 1908खीस्ताब्दतः भूरिसिंहसंग्रहालये चम्बानगरे सुरक्षितमस्ति। अस्मिन् अभिलेखे एकस्मिन् पक्षे विंशतिपंक्तयः अपरस्मिन् पक्षे च एकविंशतिपंक्तयः सन्ति। अस्यालेखस्य चित्रमेकं प्रदर्शयतेऽत्र - **(द्रष्टव्या चित्रसंख्या – 03)** चित्रे प्रदर्शितानां मूलपङ्क्तीनां देवनागरीलिप्याम् अक्षरान्तरणम् [1]-

किष्किन्धिकाधीशकुले प्रसूता सोमप्रभा नाम बभूव तस्या।
देवी जगद्भूषणभूतमूर्तिस्त्रिलोचनस्येव गिरीशपुत्री।। अपूर्व-
मिन्दुम्प्रविधाय वेधास्सदा स्फुरत्कान्तिकलंकमुक्तम्----सम्पूर्णबिम्बं
वदनं यदीयमभूत्तराङ्कण्टकिताङ्गयष्टिः।। नानाविधालङ्कृतिसन्नि-
वेशविशेषरम्या गुणशालिनी या। मनोहरत्वं सुतरामवाप सचेतसां
सत्कविभारतीव।। श्रृङ्गारसिन्धो---किमियन्नु वेला किं वा
मनोभूतरूमञ्जरी स्यात् वसन्तराजस्य नु राज्यलक्ष्मीस्त्रैलोक्यसौन्दर्य-

इत्यादि-समग्रोऽयं शिलालेखः संस्कृतकाव्यरूपेण द्वाविंशतिछन्दस्सु निबद्धोऽस्ति। प्रथमोऽन्तिमश्च श्लोकः आर्याछन्दसि, द्वितीयः तृतीयश्च वसन्ततिलकाछन्दसि, शेषाश्च उपजातिछन्दसि निबद्धास्सन्ति। आलेखेऽस्मिन् सोमप्रभया सज्जितस्य अर्धनारीश्वरस्य स्मरणं कुर्वन् सात्यकिनामधेयनृपस्य तथा च किष्किन्धानरेशस्य कन्यायाः

[1] ओझा,रायबहादुर पं.गौरीशंकर हीराचन्द, 1988, भारतीय प्राचीन लिपिमाला, पृ, 74

सोमप्रभायाः वर्णनमस्ति। नायिकायाः सौन्दर्यवर्णनं, पर्वतराजहिमालयस्य पुत्र्या पार्वत्या सह सोमप्रभायाः उपमा कृतास्ति। चन्द्रशेखरेण शिवेन सह सात्यकिराज्ञः मैत्र्यर्थं कामनामकरोत्। तथा च सात्यकिद्वारा निर्मितस्यास्य शिवालयस्य ख्यातिः, सात्यकिराज्ञः जयश्रीः च भुवि प्रथिता भवेत् इति मङ्गलकामना कृतास्ति।

चम्बाजनपदस्य प्राचीनराजधान्यां ब्रह्मपुरे(भरमौरे) लक्षणादेव्याः मन्दिरे तथा च तत्रत्यस्य शिवालयस्य प्राङ्गणे नन्दीप्रतिमायाः आधारशिलायां महत्त्वपूर्णः आलेखः वर्तते। आलेखोऽयं नृपस्य मेरुवर्मणः आदेशानुसारं तस्य गुग्गा-नामधेयेन कर्मिणा लिखितोऽस्ति। अस्य शिलालेखस्य लिप्यन्तरणस्य कार्यं सर्वप्रथमम् ए.कनिघंममहादेन कृतम्[1]। पुनः जे-पी-वोगलमहोदयेन अस्याभिलेखस्य सुस्पष्टरूपेण लिप्यन्तरणं कृतम्[2]। **द्रष्टव्या चित्रसंख्या** 04) चित्रे प्रदर्शितानां मूलपङ्क्तीनां देवनागरीलिप्याम् अक्षरान्तरणम् - **ओम्। मोषूणस्वगोत्रदित्यवंशसंभूतः श्रीआदित्यवर्मदेवप्रपौत्र-श्रीबलवर्मदेवप्रौत्र- श्रीदिवाकरदेववर्मपुत्रेण** (1.2) **श्रीमेरुवर्मणात्मपुण्यवृद्धये लक्षणादेव्या अर्चा कारिताः कर्मिणा गुग्गेन।**

अस्य अभिलेखस्य कालः सप्तमशताब्ध्याः उत्तरार्धः अष्टमशताब्द्याः वा पूर्वार्धः स्वीक्रियते।[3] तत्रैव मणिमहेशदेवालयस्य प्राङ्गणस्थायां नन्दीप्रतिमायाः आधारशिलायां राज्ञः मेरूवर्मणः शिलालेखः प्राप्यते। **(द्रष्टव्या चित्रसंख्या** – 05) चित्रे प्रदर्शितानां मूलपक्तिनां देवनागरीलिप्याम् अक्षरान्तरणम् - **ओम् प्रासादं मेरूसदृशं हिमवन्मूर्ध्नि कृत्वा स्वयं प्रवर-कर्मशुभैरनेकैः। तच्चन्द्रशाला रचिता नयनाभिरामा प्राग्ग्रीवकैर्विविधैर्मण्डपैर्नैकचित्रैः।** (1.2) **तस्याग्रतो (स्थापितो) वृषभः पीन-कपोलकायः संश्लिष्टवक्षः ककुद् उन्नतदेवयानं। श्रीमेरूवर्मणश्चतुरूदधि (समतिक्रान्त) कीर्तिरेषा मातापित्रोरात्मनश्च सततफलाभिवृद्ध्यै।** (1.3) **कृतं कर्मिणा गुग्गेन।**

ततश्च चम्बानगरात् 40 कि.मी. पर्यन्तं छतराडीनामके ग्रामे मेरुवर्मणः शासने काले एव निर्मितः देव्याः शक्त्याः देवालयः वर्तते। तस्मिन् देवालयेऽपि भगवत्याः शक्त्याः प्रतिमायाः आधारशिलायां पङ्क्तिद्वयात्मको संस्कृतालेखः वर्तते। आलेखोऽयमपि नृपस्य मेरुवर्मणः आदेशानुसारं तस्य गुग्गा-नामधेयेन कर्मिणा लिखितोऽस्ति। **(द्रष्टव्या चित्रसंख्या-** 06) अस्य संस्कृतालेखस्य देवनागरीलिप्याम् अक्षरान्तरणमनेन प्रकारेणास्ति-

ओम् आसीद्विशुद्धकुलधुर्यवाहः श्रीदेववर्मेति प्राङ्कीर्तिः।
तस्य सुतः सर्वगुणाभिरामः श्रीमेरूवर्मा प्रथितयशः पृथिव्याम्।
मातापितृपुण्यनिमित्तं पूर्वं कारिता भक्तित एव शक्तिः। जित्वा
रिपून् दुर्जयदुर्गसंस्थां कीर्तियशो धर्मं विवर्द्धितायुः। कृतं कर्मिणा गुग्गेण।

चम्बानगरे भूरिसिंहसंग्रहालये नृपस्य युगाकरवर्मणः ताम्रपत्रलेख स्थापितोऽस्ति। युगाकरवर्मणः ताम्रपत्रभिलेखे शिवस्तुतिः वर्तते। अस्यालेखस्य प्रारम्भः मालिनीछन्दसि परमात्मनः शिवस्य स्तुतिरस्ति तथा चाग्रे

---

[1] Cunningham, Alexander., 1878, Reports of the Archaeological Survey of India., ASI - 79 P. 109-112
[2] Vogel, Jean Phillippe. Chhabra, Bahadur Chand. 1994 Antiquities of Chamba State: Inscriptions of Pre-Muhammadan Period. ASI., P. 141-142.
[3] Handa, Om Chanda, 2001 Temple Architecture of western Himalaya: Wooden temple, Indus Publishing., P. 136-138

युगाकरवर्मणः पितुः साहिलस्य तथा मातुः नीनायाः अपि नामोल्लेखः वर्तते। अस्मिन्नालेखे भरमौरस्य प्राचीनाभिधानस्य ब्रह्मपुरस्यापि उल्लेखो विद्यते। ताम्रपत्रे{यं अस्य प्राचीनतावशात् किञ्चित् खण्डितोऽस्ति तथापि ऐतिहासिकदृष्ट्या अतीव महत्त्वपूर्णमस्ति। अस्य एकस्मिन् पटले विंशतिपङ्क्तयः सन्ति। **ओम् स्वस्ति। ओम् गणपतये नमः। अवनि-सलिल-वह्नि-व्योम-वायव्यान्तरात्म---** (1.1) **पुराणस्वाङ्गभूतयोने। हर तव शिव शर्व त्र्यम्बकेशान रुद्र त्रिनयन वृषभाङ्का** (1.2) **नन्तमूर्ते नमस्ते। श्री क्षपणका-वासात्परमब्रह्म** (1.3) --- (1.20) **युगाकरवर्म-देव-स्वहस्तः।**

हिमाचलप्रदेशे विविध-शिलालेख-ताम्रपत्रभिलेखादिभिः सममेव भूर्जपत्र-प्राचीनकर्गदादिषु लिखिताः पाण्डुलिपयः अपि प्राप्यन्ते। भारतसर्वकारेण संचालितस्य इन्दिरागान्धिराष्ट्रियकलाकेन्द्रस्य पाण्डुलिपिसंरक्षणाभिया-नान्तर्गतं हिमाचलप्रदेशेऽपि पाण्डुलिपीनां संक्षरणस्य सूचीनिर्माणस्य च कार्यं जायमानमस्ति। हिमाचलप्रदेश-कला-एवं-भाषा-अकादम्याः अपि अस्मिन् अभियाने महनीयं योगदानं वर्तते। अस्याः अकादम्याः पुस्तकालये पाण्डुलिपीनां समृद्धः संग्रहः विद्यते। अकादम्याः पुस्तकालये विद्यमानानां संस्कृतस्य दुर्लभ-पाण्डुलिपीनां नामानि अनेन प्रकारेण सन्ति[1]-

| | |
|---|---|
| वाजसनेयी संहिता(हरिश्चन्द्र शास्त्री अनुवाद) | पूजारत्नः भाग-1,2,3 |
| विश्वकर्मा प्रकाशः | प्रश्नशिरोमणिः |
| अन्नपूर्णा कथा | स्वस्ति श्री (शीर्षकरहित) |
| शिवमहिम्नस्तोत्रम् | कर्मकाण्डभास्करः |
| भावप्रकाशनिघण्टुः | ज्योतिषविज्ञानम् |
| प्रश्नवैष्णवशास्त्रम् | त्रिकाल-सन्ध्या |
| श्रीशालग्रामस्तोत्रम् | श्रीविष्णुसहस्रनामस्तोत्रम् |
| बृहत्स्तोत्ररत्नाकरः | याज्ञवल्क्यस्मृतिः |
| श्रीनारायणकवचम् | श्रीहरिनाममाला |
| शब्दार्थचिन्तामणिकोश भाग-3, 4- | जपविधिः |
| नवग्रहपूजा | देवी कवचस्तोत्रम् |
| भुण्डा-विवरणिका(नृमेधयज्ञ) | शब्दक्रमी |
| शब्दसंज्ञिका (प्रथम शतकम्) | इन्द्राक्षी-स्तोत्रम् |
| नृसिंहकवचम् | माधवनिदानम् |
| अथ वास्तुसारः | शाक्तप्रमोदः |
| श्रीमद्भगवद्गीता | भैषज्य-रत्नावली |
| आह्निक-कर्म-सूत्रावली | ललितकाव्यम्(जुव्वलराज्य) |

[1] **शर्मा, देवराज**, 2007, **हिमाचलप्रदेश में संस्कृत शिलालेख तथा पाण्डुलिपियां, कृति रक्षण (द्वैमासिक पत्रिका)**

एवं संस्कृतस्य विविधशास्त्राणां पञ्चशतादधिकैकशतं हस्तलिखिताः पाण्डुलिपिग्रन्थाः अकादम्याः पुस्तकालये सन्ति। हिमाचलप्रदेश-कला-संस्कृति-एवं भाषा अकादम्या 2015 ख्रीस्ताब्दस्य वार्षिक-प्राशासनिक-प्रतिवेदनानुसारं राष्ट्रिय-पाण्डुलिपि-मिशनिति भारत-सर्वकारस्य योजनया अकादम्यान्तर्गतं स्थापितेन पाण्डुलिपि-संसाधन-केन्द्रेण वर्तमानं यावत् 126000 इति संख्यकानां पाण्डुलिपीनां सूचीकरणस्य कार्यं सम्पादितम्। 2014-15प्रशासनिक-वर्षे 13500इति संख्यकानां पाण्डुलिपीनां संग्रहणं कृतम्।[1] इतोऽपि चम्बायां भूरिसिंहसंग्रहालये, धर्मशालायां तिब्बताध्ययने केन्द्रे, हिमाचलस्य शक्तिपीठेषु, विविध-मन्दिरन्यासेषु, प्रदेशस्य संस्कृतमहाविद्यालयानां पुस्तकालयेषु, हिमाचलप्रदेशस्य विदुषां व्यक्तिगतसंग्रहेषु च नैकाः पाण्डुलिपयः सन्ति।

हिमाचलप्रदेशे विविधासु लिपिषु निबद्धाः पाण्डुलिपयः, शिलालेखाः, स्तम्भलेखाः प्रायः संस्कृतनिष्ठाः एव दृश्यन्ते। हिमाचलप्रदेशे संस्कृतस्य सुसमृद्धा परम्परा अद्यावधिः प्रचलिता वर्तते। अत्रत्येषु मन्दिरेषु संस्कृत-शिलालेखाः, संस्कृतविदुषां व्यक्तिगतसंग्रहेषु पाण्डुलिपयश्च हिमवत्प्रदेशे संस्कृतस्य गौरवपूर्णमितिहासं प्रख्यापयन्त्यः सन्ति।

शोधपत्रेऽस्मिन् निर्दिष्टानि द्रष्टव्यानि चित्राणि –

चित्रसंख्या – 01 (शारदा-टाकरीलिप्योः वर्णमाला)

चित्रसंख्या – 02 (पावुची लिपेः देवनागरी-लिप्यन्तरणम्)

[1] वार्षिक प्रशासनिक रिपोर्ट (वर्ष 2014-15), हिमाचल प्रदेश कला संस्कृति एवं भाषा अकादमी, शिमला। पृ.सं-29




चित्रसंख्या – 3 (सरांहा प्रशस्ति)

चित्रसख्या – 4 (ब्रह्मपुरे(भरमौरे) लक्षणादेव्याः मन्दिरे शिलालेखः)

Lakṣaṇā Image Inscription.

चित्रसंख्या - 5 (मणिमहेशदेवालयस्य नन्दीप्रतिमायाः आधारशिलायां मेरूवर्मणः शिलालेखः)

Nandi Image Inscription.

चित्रसंख्या – 6 (छतराडी-नामके ग्रामे शक्त्याः मन्दिरे संस्कृतालेखः)





**सहायकग्रन्थाः**

1. ओझा, रायबहादुर पं. गौरीशंकर हीराचन्द, 1988, भारतीय प्राचीन लिपिमाला,मुंशीराम मनोहरलाल, नई दिल्ली।
2. झा, डॉ. नरेश (सम्पा.), 2014, याज्ञवल्क्य शिक्षा, चौखम्भा सुरभारती प्रकाशन वाराणसी।
3. पाण्डेय, पं. राजबली, 1978, भारतीय पुरालिपि, लोकभारती प्रकाशन इलाहाबाद।
4. मिश्रः, प्रो. युगलकिशोर (सम्पा), 2004, शतपथ ब्राह्मण, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः वाराणसी।
5. रमण, डॉ.तुलसी (सम्पा.), 2012, हिमाचल प्रदेश अभिलेख और पाण्डुलिपियां, हिमाचल प्रदेश कला संस्कृति एवं भाषा अकादर्म शिमला।
6. वर्मा, डॉ. श्यामा, गौतम. सूनृता, शर्मा.देवराज, 2012, साञ्चा, हिमाचल कला संस्कृति भाषा अकादमी, शिमला।
7. Burnell, A.C., 1878, South Indian Palaeography. Ludgate Hill London, IInd Edition.
8. Handa,Om Chanda. 2001.Temple Architecture of western Himalaya:Wooden Temple, Indu Publishing.
9. Vogel, Jean Phillippe; Chhabra, Bhadur Chand, 1994, Antiquities of Chamba State: Inscription of the pre-Muhammadan Period. ASI.
10. कृतिरक्षण (द्वैमासिक पत्रिका), जून 2007. राष्ट्रीय पाण्डुलिपि मिशन, नई दिल्ली।
11. वार्षिक प्रशासनिक रिपोर्ट, 2014-15, हिमाचल प्रदेश कला संस्कृति एवं भाषा अकादमी, शिमला।
12. Cunningham, Alexander., 1878-1879, Reports of the Archaeological Survey of India, ASI.



**Author's Detail**

Address: Assistant Professor (Veda),
Gorakshnath Govt. Sanskrit College Nahan,
Distt. - Sirmaur, Himachal Pradesh, 173001, India.


*****************************

## SUBMIT YOUR MANUSCRIPT

**Call for Research Papers for 18th Issue of peer reviewed Research Journal**

**“प्राची प्रज्ञा” (ISSN 2348 – 8417)**

महोदयाः !

“प्राची प्रज्ञा” (ISSN 2348 – 8417) इति सन्दर्भितान्ताराष्ट्रियान्तर्जालपत्रिकायाः “शास्त्रमञ्जूषा” इति षाण्मासिकखण्डस्य **अष्टादशावतरणस्य (2024-जून्-मासे प्रकाशयिष्यमाणस्य)** कृते अधस्तनविषयमवलम्ब्य मौलिकाः शोधलेखा आविश्वं विद्यमानेभ्यो विद्वद्भ्य आमन्त्र्यन्ते । A4 पृष्ठे 1.15 पङ्क्तिगतान्तरालसहिता न्यूनातिन्यूनं दशपृष्ठात्मका लेखा निम्नप्रारूपेणैव टङ्कयित्वा prachiprajnaenb@gmail.com इति अन्तर्जालसंकेतेन मृदुप्रतिकृतिरूपेणैव **31st March, 2024 (12:00 Midnight IST)** पर्यन्तं प्रेषयितुं शक्यन्ते।

**शोधपत्रस्य प्रारूपम् -**

- शोधलेखाः संस्कृतभाषया/ Englishभाषया / हिन्दीभाषया वा 12/ 14 अक्षरमानेन A4 पृष्ठे 1.15 पङ्क्ति-अन्तरालेन समर्थ्यप्रान्तीयस्थापनपूर्वकं (Justified aligned) Microsoft Word आधारितसञ्चिकाप्रारूपमेवाश्रित्य टङ्किताः स्युः। संस्कृतभाषया हिन्दीभाषया च लेखाः Arial Unicode MS इति Unicode आधारितदेवनागरीलिप्या / रोमनलिप्या वा टङ्किताः स्युः।
- पादटिप्पणी / सन्दर्भसूची American Psychological Association (APA7) पद्धतिमनुसृत्य निर्मातव्या।
- पृष्ठसज्जाक्रमो अधोनिर्दिष्टरूपेण स्यात्
  1. शीर्षकपृष्ठम्
  2. शोधसारः - आंग्लभाषया 100 शब्दैः
  3. कुञ्चीशब्दाः -
  4. मूलपाठः पादटिप्पणीसहितः
  5. सन्दर्भः - APA7 अनुरूपः
  6. अनुक्रमणिका
  7. चित्राणि
  8. परिशिष्टानि
- शीर्षकपृष्ठम् अधोनिर्दिष्टप्रकारेण स्यात्
  1. शोधपत्रशीर्षकं – आंग्लरूपान्तरसहितं स्यात्
  2. निबन्धकारस्य नाम आंग्ल-देवनागरीलिपिभ्यां
  3. निबन्धकारस्य संस्थासम्बद्धता
  4. निबन्धकारस्य पत्राचारसंकेतः
  5. अणुपत्रसंकेतः
  6. दूरभाषसंख्या

▪ शोधपत्रेण सह स्वीयमेकम् सद्यः गृहीतं 3.5 x 4.5 cm परिमितं स्वीयं भावचित्रं 20 kb परिमितं (JPEG प्रारूपेण) अवश्यं प्रेषणीयम्।

▪ शोधपत्रेण सह घोषणापत्रस्य पूरितप्रारूपस्य अङ्कीयप्रतिमा (scanned copy of the filled in declaration form) अवश्यं प्रेषणीया ।

▪ विशेषज्ञमण्डल्या पुनरीक्षणोपरान्तं (Peer Reviewing) प्रकाशनयोग्याः शोधलेखाः प्रकाशयिष्यन्ते।

**प्रकाशनयोग्यतायाः मानदण्डाः निम्नवत् निर्धारिताः सन्ति-**

1. शोधलेखः संस्कृतवाङ्मयस्य केनाप्येकेनाङ्गेन सह सम्बद्धः स्यात्। यथा- वेदः, वेदाङ्गानि, उपनिषद्, दर्शनानि, पुराणानि, स्मृतिः, योगः, आगमः, साहित्यं, कव्यशास्त्रं, व्याकरणं, तन्त्रं, ज्योतिषं तथा संगणकीयभाषाविज्ञान-पर्यावरणाद्याधुनिकविषयाः।
2. शोधलेखः स्वीयः मौलिकश्च स्यात्।
3. शोधलेखे विवेचनप्रक्रिया समस्याचयनत → आरभ्य क्रमेण प्राक्कल्पना → ततः समालोचनात्मकं मूल्याङ्कनं → तथा अन्ते शोधस्य मौलिकनिष्कर्षेण सहोपसंहारः इत्येवं क्रमवद्धतापुरःसरं विकसिता स्यात्।
4. शोधलेखे काचिन्नवीना अवधारणा, किमपि नवीनं तथ्यं, नवीनं मूल्याङ्कनं, नवीनः सिद्धान्तः, नवीना शैली, नवीनः संकेतो वा अवश्यमाविष्कृतः स्यात्।
5. शोधलेखस्य भाषा परिष्कृता, प्राञ्जला, स्तरानुगुणा च स्यात्।
6. शोधलेखे समसामयिकी सम्बद्धता, तार्किकम् अनुशीलनं, तथा सन्दर्भाणामौचित्यमवश्यं स्युः।
7. शोधलेखे अन्यस्य प्रकाशनस्यांशोद्धरणे तदनुमतिः अवश्यं स्वीकर्तव्या, यदि तादृशमुद्धरणं ५०० शब्देभ्योऽधिकमस्ति।
8. प्रकाशनात्परं शोधलेखस्य सर्वाधिकारः "प्राची प्रज्ञा" इत्यस्याः एव सुरक्षितः भविष्यति।
9. प्रकाशनसम्बन्धे पत्राचाराय शोधलेखेन सह प्रयुक्तान्तर्जालसंकेतः (Email ID) एव उपयोक्तव्यः।
10. सर्वाऽपि प्रक्रिया अन्तर्जालमाध्यमेनैव सम्पादयिष्यते। मुद्रितरूपेण न काचित् प्रक्रिया अवलम्ब्यते।
11. शोधलेखस्य प्रकाशनयोग्यताऽयोग्यतानिर्धारणदायित्वं "प्राची प्रज्ञा" इत्यस्यामेव न्यस्तं भविष्यति।

**शोधपत्रेण सह प्रेषणीयानां सूची**

1. **उपर्युक्तप्रारूपानुरूपः मौलिकः शोधलेखः**
2. **सद्यो गृहीतं 3.5 x 4.5 cm परिमितं स्वीयं 20 kb परिमितं (JPEG प्रारूपेण) भावचित्रम्।**
3. **प्रदत्तप्रारूपेण घोषणापत्रम्**

## Call for Research Papers for 18th Issue of peer reviewed Research Journal

## "प्राची प्रज्ञा" (ISSN 2348 – 8417)

Respected Scholars !

Research Papers on following topics in Sanskrit/ English/ Hindi are invited from the scholars of the entire globe for the **18th Issue (to be published in June, 2024)** of peer reviewed refereed, International Research Journal "प्राची प्रज्ञा" having ISSN no. 2348 – 8417, for its half yearly section "शास्त्रमञ्जूषा". **The Last date of receipt of articles is 12:00 Midnight (IST) of 31st March, 2024**. A submission to "प्राची प्रज्ञा" must be an original work. The paper in not less than 10 pages, should be emailed to prachiprajnaenb@gmail.com in e-copy only. A submission must fulfil the following criterion"

1. Format of the Research Paper:
    - All the fonts of Devanagari / Roman and Roman with diacritical marks, must be Unicode compatible. For Devanagari, Arial Unicode MS and for Roman, Times New Roman is preferable. The size of fonts should be 12 in case of English and 14 in case of Sanskrit / Hindi.
    - Format of file must be Microsoft Word only. File Formats in Adobe Page Maker / pdf / Corel Draw / Adobe Indesign etc. are not acceptable.
    - Page size must be of A4 typed on 1.15 line spacing and justified aligned and 1" margined format.
    - Footnotes / References should be embedded in the text in a consistent style and order, as per American Psychological Association, 7th Edition (APA7) style:
    - Arrangement of the pages of the paper should be made in the following format / order:
    - Title page
    - Abstract – in English & about 100 words
    - Key Words
    - Text
    - References - (APA7) style
    - Footnotes
    - Tables
    - Figures
    - Appendices

2. The Title page setup should be made in the following format / order:
    - Paper title – Must be with English counterpart
    - Author name in both English and Devanagari fonts
    - Author's affiliation
    - Address to contact
    - Email id
    - Mobile Number
    - A passport size photograph in JPEG format only of 3.5 x 4.5 cm, up to 20 kb, must be attached along with the Research Paper.
    - Each Research paper should be accompanied with a scanned copy of the filled in declaration form available in our site.

All the research papers undergo a review process. The papers (without the name of the contributor) are sent to the reviewers having expertise on the field, and considered for publication only on the recommendations of the reviewers on following parameters:

1. The Research Paper must have a link to any branch of Sanskrit Studies, i.e. Vedas, Vedāṅgas, Upaniṣads, Philosophies, Purāṇas, Smṛtis, Literature, Poetics, Grammar, Tantras, Astrology,

Astronomy and Modern subjects like Computational Linguistics, Environmental Science and allied fields.

2. The Research Paper must be an original contribution of the author.
3. The discussion should develop in the order from Statement of Problem to→ assumption or hypotheses to → critical evaluations → to a conclusion with the findings of research.
4. The Research Paper must present a discovery / invention of a new - idea / thought /design / plan / awareness / inkling/ indication / appreciation / conception / understanding / opinion / view/ concept / notion / theory / principle or even a new style of interpretation.
5. The language must be lucid and must meet the standard of presentation.
6. The Research Paper must have contemporary relevance, contributions to knowledge, clarity and logic in analysis, methodology and appropriateness of references.
7. f the author has quoted more than 500 words / a table / a figure from a published work, in the article, a copy of permission obtained from the respective copyright holder needs to be enclosed.
8. The copyright is transferred to the Journal if article is accepted for publication in "**प्राची प्रज्ञा**"/ Prachi Prajna, ISSN 2348 – 8417.
9. All the correspondence should be made through the same email ID only by which the paper has been submitted.
10. All the process will be made online only and no printing media will be undertaken.
11. The selection of the Research paper is entirely entrusted to "**प्राची प्रज्ञा**".

If the paper meets the preliminary requirements, the article will be processed for review, which could take up to 3 months. The accepted articles are scheduled for publication in the alphabetical order.

**Check list of the enclosures along with the Research Paper:**

1. **Original Research Paper in the prescribed format mentioned above.**
2. **A passport size photograph in JPEG format only of 3.5 x 4.5 cm up to 20 kb.**
3. **A Declaration by Author in the prescribed format**

(Editors, Śāstramañjūṣā)

**"प्राची प्रज्ञा"**

